THE

# VIDAGDHA-MÂDHAVA

OF

## S'RÎ RÚPADEVA GOSVÂMÎ.

WITH A COMMENTARY.

EDITED BY

PAṆḌIT BHAVADATTA S'ÂSTRÎ,

2nd Paṇḍit, Government College, Ajmer,

Son of

MAHÂMAHOPÂDYÂYA PANDIT S'IVADATTA

—Head Paṇḍit and Superintendent, Sanskrit Department

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S 'NIRṆAYA SÂGARA' PRESS,

BOMBAY.

1903.

*Price 1¼ Rupee*

काव्यमाला. ८१.

श्रीरूपगोस्वामिप्रणीतं

# विदग्धमाधवम् ।

सटीकम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारककेदारनाथ-
कृपाङ्गीकृतशोधनकर्मणा
महामहोपाध्यायपण्डितशिवदत्तशर्मतनूजपण्डितभवदत्तशास्त्रिणा,
मुम्बापुरवासिपरवोपाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१९०३



मूल्यं सपादो रूप्यकः ।

# काव्यमाला

श्रीरूपदेवगोस्वामिरचितं

## विदग्धमाधवम् ।

सटीकम् ।

### प्रथमोऽङ्कः ।

सुधानां चान्द्रीणामपि मधुरिमोन्माददमनी
दधाना राधादिप्रणयघनसारैः सुरभिताम् ।

---

अथ तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः 'हृतात्मनो हृतप्राणांश्च भक्ति-र(भ)निच्छतो मे गतिमन्वीं प्रयुङ्क्त' इति श्रीभागवतीयपद्यनिबद्धप्रसिद्धार्थकतत् श(?)-········निर्दिश्यैर्यैरेव दर्शनीयावयवोदारविलासादिभिर्हृतमनःप्राणा भक्तिरसिकास्ते एव कीदृशा दर्शनीयावयवाः नयनानन्दकानि श्रीमदङ्गानि एव कीदृशानि वा तानि उदारविलासहासेक्षितवामसूक्तानि परमानन्ददायकलीलाविशेषसुन्दरमन्दहासावलोकरमनी-(णी)यनर्मभङ्गीव्यञ्जकानि वाक्यानीति श्रोतृजिज्ञासायां सत्यां परमरसिकचूडामणिः सोऽयं ग्रन्थकृच्छ्रीरूप आत्मनाविर्भावितश्रीविदग्धमाधवनाटकेनैव तानि दर्शनीयभगवदङ्गानि उदारविलासमन्दहासावलोकरमनी(णी)यनर्मभङ्गीव्यञ्जकवाक्यानि च अभिनेतुकामः समुचितनान्दीप्रयोगेन(ण) परममङ्गल सकलप्रयोजनमौलिभूत वस्तु निर्दिशति—[सुधा-

---

१. एतन्नाटकस्य कर्तुर्नाम मूलपुस्तकदर्शनेन न कुत्राप्युपलभ्यते, तथापि प्रथमपद्यीयव्याख्यायां 'सोऽयं ग्रन्थकृच्छ्रीरूप आत्मनाविर्भावितश्रीविदग्धमाधवनाटकेनैव—' इति लेखोपलम्भेन, अग्रे 'सूत्रधारोऽत्र श्रीरूपगोस्वामी' इति लेखेन च ग्रन्थकर्तुर्नाम व्यक्तमभूत्. परं चानेन कविवरेण निष्टीकं सटीकं वा नाटकं निर्मितमिति संदिग्धमेव, टीकाकर्तुः पृथङ्नामानुपलम्भात्. २. को ह्यस्याष्टीकायाः कर्तेति तु न सम्यक्तया निश्चीयते, परं च मूलटीकयो रचनायां भेददर्शनेन, 'अत्र पाठान्तरं तु श्रीरूपगोस्वामिनः स्वाक्षरपुस्तकेऽदृष्टत्वान्न संमतम्' इति टीकाकर्तुर्लेखेन चानुमीयते मूलकृतः कश्चनान्य एवैतट्टीकाकृदिति.

समन्तात्सतापोद्गमविषमससारसरणी-
प्रणीता ते तृष्णा हरतु हरिलीलाशिखरिणी ॥ १ ॥

अपि च ।

अनर्पितचरीं चिरात्करुणयावतीर्ण कलौ
समर्पयितुमुन्नतोज्ज्वलरसा स्वभक्तिश्रियम् ।
हरि पुरटसुन्दरद्युतिकदम्बसदीपित
सदा हृदयकन्दरे स्फुरतु व शचीनन्दन ॥ २ ॥

(नान्द्यन्ते)

**सूत्रधारः**—अलमतिविस्तरेण। भो भो, समाकर्ण्यताम्। अद्याह स्व-

---

नामिति ।] हरिलीलारूपशिखरिणी ते तव तृष्णा हरतु। 'शिखरिणी रसालावृत्तभेदयो' इति विश्व । तृष्णा कीदृशीम्। समन्तात्सवत सतापानामाध्यात्मिकादीनामुद्गमो यस्या एवभूता या समन्ताद्विषमा देवनरस्थावरत्वप्रापकलक्षणा ससाररूपा सरणी पन्था तत्प्रणीताम्। तत्पर्यटनजनितामित्यर्थ ।हरिलीलाशिखरिणी कीदृशी। चन्द्रसबन्धिनीना सुधाना मधुरि[मो]-मादहेतुना य उन्माद अहमेव स्ववतो माधुर्यशाली(लि)नीति योऽहकारस्त दमयितु शील यस्या सा । पुन कथभूता । राधादीना प्रणया एव घन सार (रा) कर्पूरास्तै सुरभिता सौगन्ध्य पक्षे मनोहारित्व दधाना। 'सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभि स्मृतम्' इति विश्व ॥ १ ॥ अथ यत्प्रेरणया तादृशापूर्वनाटकनिर्माणे शक्तिस्तस्य महाप्रभो परमाभीष्टदेवस्य स्फूर्तिमाशिषयति—**अनर्पितेति** । महाप्रभो स्फूर्ति विना हरिलीलारसास्वादनानुपपत्तेरिति भाव । व युष्माक हृदयरूपगुहाया शचीनन्दनो हरि पक्षे सिंह स्फुरतु । य शचीनन्दन कलौ स्वभक्तिश्रिय स्वभजनसपत्ति करुणया समर्पयितुमवतीर्ण । कथभूताम् । अनर्पितचरीं केनापि न आपतपूर्वाम्। ननु कपिलदेवादिभि स्वमानादिभ्यो भगवद्भजन पूर्वं कि नोपदिष्टम्, तत्राह—सकलरससद्भावेऽपि उन्नत उज्ज्वल रसो यस्या ता भक्तिश्रियम्।तथा चोज्ज्वलरसप्रधाना भक्तिर्नोपदिष्टेति भाव । कथभूत । पुरटात्सुवर्णादपि सुन्दरद्युतिसमूहेन सदीपित । एव सति पर्वतकन्दरायां उदित सिंहो यथा तत्रस्थान् हस्तिनो नाशयति, तथा युष्माक हृदयकन्दराया उदित शचीनन्दनस्वरूपसिंह हृद्रोगरूपहस्तिनो नाशयतीति ध्वनि ॥ २ ॥ नान्दीस्वरूपश्लोकद्वयस्यान्ते सूत्रधार आहेति शेष । सूत्रधारोऽत्र श्रीरूपगोस्वामी। अत्र श्लोकद्वयमेवास्तु ॥ अतिविस्तरेणालमिति सर्वत्र नाटकस्यादौ सुखानामाकाङ्क्षावर्धनार्थं सूत्रधारस्येयमुक्ति । नान्दीलक्षण नाटकचन्द्रिकायाम्—'प्रस्तावनायास्तु मुखे नान्दी कार्या शुभावहा।आशीर्नमस्क्रियावस्तुर्निर्देशान्यत-

मान्तरे समादिष्टोऽस्मि भक्तावतारेण भगवता श्रीशंकरदेवेन, यथा—'अये ताण्डवकलापण्डित, इह किल वल्लवीचक्रचेतोवृत्तिमकरीविहारमकरालयस्य निरवद्यवेणुवादनविद्यास्वाध्यायसिद्धीना प्रथमाध्यापकस्य सुगन्धिपुष्पावलीसौन्दर्यतुन्दिलायामरविन्दबान्धवनन्दिनीतीरान्तकाननलेखायामवलम्बितमत्तपुंस्कोकिललीलस्य परमानन्दवर्धिनि गोवर्धननितम्बे संभृतनव्याम्बुदाडम्बरस्य किशोरशिरोमणेर्नन्दनन्दनस्य प्रेमभराकृष्टहृदयो नानादिग्देशत साम्प्रतं रसिकसंप्रदायो वृन्दावनविलोकनोत्कण्ठया केशितीर्थोपकण्ठे समीयिवान् । स च धन्य·

कृतं गोपीवृन्दैरिह भगवतो मार्गणमभू-
दिहासीत्कालिन्दीपुलिनवलये रासरभसः ।

---

मान्विता ॥ अष्टाभिर्दशभिर्युक्ता किं वा द्वादशभि पदै । चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्ज्वला । मङ्गल चक्रकमलचकोरकुमुदादिकम् ॥' इति । प्रस्तुतस्यार्थस्यावतरण प्रस्तावना । प्रस्तुतस्य राधामाधवयो संभोगरूपार्थस्य अवतरणम् । पाठ इति प्रसिद्धमित्यर्थं । अत्रेय सुधानामिति द्वादशपदा नान्दी ॥ **शंकरदेवेनेति** । ब्रह्मकुण्डतीरवर्तिना गोपीश्वरनाम्ना । स्वप्ने शंकरादेशमेवाह—**यथेति** । अये नृत्यकलाया पण्डित श्रीरूप, नन्दनन्दनस्य प्रेमातिशयेन आकृष्टहृदयो रसिकसप्रदाय वृन्दावनविलोकनोत्कण्ठया केशितीर्थसमीपे नानादिग्देशतः साम्प्रत समीयिवान् । आगतवानित्यर्थ । 'लीलाप्रेम्ना(म्णा) प्रियाधिक्य माधुर्ये वेणुरूपयोः । इत्यसाधारण प्रोक्त गोविन्दस्य चतुष्टयम् ॥' इति भक्तिरसामृतसिन्धूक्तदिशा असाधारणैरेव गुणचतुष्टयैर्नन्दनन्दन विशिनष्टि । तत्रापि अतुल्यप्रेम्णा प्रियाणा यदाधिक्य तन्मूलकमेवान्यद्गुणत्रयमिति प्रथम तेनैव विशिनष्टि—**वल्लवीति** । वल्लवीसमूहस्य चेतोवृत्तिरूपमकर्या विहारार्थ मकरालयस्य समुद्रस्वरूपस्य । वेणुमाधुर्यमाह—निर्दोषवेणुवादनविद्याया अध्ययनरूपसिद्धीनां प्रथमाध्यापकस्य । लीलायास्तु मथुरात सकाशाद्व्रजमान एव पूर्णतमत्वेऽपि वृन्दावनेऽतिवैशिष्ट्यमाह—**सुगन्धीति** । सुगन्धिपुष्पावलिसौन्दर्येण तुन्दिला या यमुनातीरान्ते काननलेखा वनश्रेणी तस्यामवलम्बिता मत्तपुंस्कोकिलस्येव लीला यस्य । रूपमाधुर्यमाह—**परमानन्देति** । परमानन्दवर्धिनि गोवर्धननितम्बे सभृत पूर्णनव्याम्बुदस्येव आडम्बरो विक्रमो यस्य । **किशोरशिरोमणेरिति** । कैशोरे नित्यस्थितिं द्योतयति । स च रसिकसंप्रदायो धन्य । [**कृत गोपीत्यादि** ।] इह स्थले गोपीवृन्दैर्भगवतो कृष्णस्य अन्वेषणमभूत् । एवमिह रासजन्यरभसो हर्ष आसीत् । इति

इति श्रावं श्रावं चरितमसकृद्गोकुलपते-
लुठन्नुद्वाष्पोऽयं कथमपि दिनानि क्षपयति ॥ ३ ॥

तदिदानीमेतस्य भक्तवृन्दस्य मुकुन्दविश्लेषोद्दीपनेन बहिर्भवन्तः प्राणाः कामपि तस्यैव केलिसुधाकल्लोलिनीमुल्लासयता परिरक्षणीया भवता। मत्कृपैव ते सामग्रीं समग्रयिष्यति' इति। तेनाद्य जगद्गुरोरस्य निदेशमेवानुवर्तिष्ये।

(प्रविश्य)

**पारिपार्श्विकः**—भाव, भवता निबद्धस्य विदग्धमाधवनाम्नो नवीननाटकस्य प्रयोगानुसारेण गृहीतभूमिकाः कुशीलवा रङ्गप्रवेशाय तत्रभवन्तमनुज्ञापयन्ति।

**सूत्रधारः**—मारिष, निर्मितः किमिति तन्नाटकपरिपाटीभिर्वैर्णिकापरिग्रहः। (क्षणं विमृश्य।) भवतु।

ममास्मिन्संदर्भे यदपि कविता नातिललिता
मुदं धास्यन्त्यस्यां तदपि हरिगन्धाद्बुधगणाः।

---

गोकुलपतेरसकृच्चरितं श्रुत्वा श्रुत्वा लुठन्नयं रसिकसंप्रदायः श्रीकृष्णविरहेण कथमपि दिनानि क्षपयति यापयति ॥ ३ ॥ तत्तस्मादिदानीं तस्य श्रीकृष्णस्यैव कामपि केलिसुधारूपां कल्लोलिनीं नदीं उल्लासयता आविर्भावयता भवता एतस्य भक्तवृन्दस्य यः कृष्णविश्लेषस्तस्य उद्दीपनेन बहिर्भवन्तः प्राणाः परिरक्षणीयाः। तादृशलीलाग्रन्थं संपादयितुं सामग्रीं समग्रयिष्यति पूरयिष्यति। 'समग्रं सकलं पूर्णमखण्डं स्यादनूनकम्' इत्यमरः। अस्य महादेवस्याज्ञां पालयिष्यामीत्यर्थः ॥ तादृशरसिकसभामध्ये प्रविश्य पारिपार्श्विक आह। परितः पार्श्वे चरतीति पारिपार्श्विकः सूत्रधारस्य शिष्यरूपो नटः। भाव हे विद्वन्। 'नाट्योक्तौ भावो विद्वानथावुकः' इत्यमरः ॥ तादृशनवीननाटकस्य प्रयोगानुसारेण गृहीता भूमिका राधिकामधुमङ्गलाद्युचितवेषभूषा यैरेवंभूताः कुशीलवा नटा रङ्गे नृत्यभूमौ प्रवेशार्थं तत्रभवन्तमित्येकपदं पूज्यं भवन्तं अनुज्ञापयन्ति विज्ञापयन्ति ॥ तदनन्तरं सूत्रधार आह—**मारिषेति**। शिष्यरूपकिंचिदूननटस्य संबोधनम्। तथा चोक्तं भरतेन—'मान्यो भावेति विज्ञेयः किंचिदूनस्तु मारिषः' इति। विदग्धमाधवनाटकपरिपाटीभिर्वैर्णिकापरिग्रहः राधिकामधुमङ्गलाद्युचितवेषभूषापरिग्रहः युष्माभिः किं निर्मितः। क्षणं विमृश्य सहसा कृतं चेत् भवतु इत्युक्त्वा आह—[**ममेति**।] ममास्मिन्नाटकरूपसंदर्भे कविता नातिललिता न मनोहरा, तथापि हरिगन्धादस्यां कवितायां बुधगणा मुदं धा-

अप शालग्रामाप्लवनगरिमोद्गारसरसा
सुधी को वा कौपीरपि नमितमूर्धा न पिबति ॥ ४ ॥

**पारिपार्श्विकः**—भाव, रङ्गलक्ष्मीकौशलस्तुतिभिरेव सभ्यानभ्यर्थयामहे, यदमी विद्यादिभिर्देवानपि तानुपालब्धुमुत्सहन्ते, किमुत नटानस्मान् ।

**सूत्रधारः**—मारिष, कृतमेतया वृथोपचारचर्यया । यत ।

अपेक्ष्य क्षममात्मनो विदधति प्रीत्या परेषा प्रिय
लज्जन्ते दुरितोद्यमादिव निजस्तोत्रानुबन्धादपि ।
विद्यावित्तकुलादिभिश्च यदमी यान्ति क्रमान्नम्रता
रम्या कापि सतामिय विजयते नैसर्गिकी प्रक्रिया ॥ ५ ॥

(सम-तादवलोक्य । सहर्षमुच्चै ।) हहो बल्लवसिंहप्रिया, भगवद्धर्मज्ञगोष्ठीगुरूणामपि युष्माक समक्ष किमप्येष विवक्षमाणस्ताण्डविको निरपत्रपाणा पदवीमारोढुमुपक्रमते । तदिमा क्षमध्व चापलारभटीम् । (इति सप्रणाम पश्यन् ।)

अभिव्यक्ता मत्त प्रकृतिलघुरूपादपि बुधा
विधात्री सिद्धार्थान्हरिगुणमयी च कृतिरियम् ।

---

स्यति । तत्र दृष्टान्त —शालग्रामस्नानेन जातो यो गरिमोद्गार गरिमप्रकाशस्तेन सरसा कौपीरपि अप कूपसबन्ध्यपि जल को वा सुधी नमितमूर्धा न पिबति ॥४॥ पारिपार्श्विक आह—हे भाव, यद्यप्यस्माक नृत्ये कौशल नास्ति तथापि नृत्यलक्ष्म्या कौशलस्तुतिभिरेव सभ्यान् वयमभ्यर्थयामहे । युष्माभि कृपयास्मिन्नृत्य कौशल स्वीक्रियतामिति प्रार्थनामादौ करिष्याम इत्यर्थ । यद्यस्मादमी सभ्या विद्यादिभिर्देवानपि उपालब्धु न्यक्कर्तुमुत्सहन्ते ॥ सूत्रधार आह—मारिष, वृथैव य उपचार अन्यधर्माणामन्यत्रारोप । तथा च देवतातिरस्काररूपान्यदीयधर्माणामत्र भक्तजनैरा(नि आ)रोप इत्यर्थ । तस्य चर्यया कृत अलम् । व्यर्थमित्यथ । 'युगपर्याप्तयो कृतम्' इत्यमर । यथा । [अपेक्ष्येति ।] दुरितोद्यमात् दुरितोत्पादकपरदारपरद्रव्यहरणोद्यमात् सज्जना लज्जन्ते, तथैव भक्तजना निजस्तोत्रानुबन्धादपि लज्जन्त । क्रमादिति । विद्यादीनामाधिक्येऽधिकैव नम्रता । एवमधिकतरत्वेऽधिकतरा अधिकतमत्वेऽधिकतमेति दिक् ॥५॥ आवेशने सबोधने हहोशब्द इति । बल्लवसिंहस्य गोपश्रेष्ठस्य कृष्णस्य प्रिया भक्ता । भगवद्धर्मज्ञसभाया गुरूणा युष्माक एष ताण्डविको नट विवक्षमाण वक्तुमिच्छन् । 'ब्रूञ् व्यक्ताया वाचि' इत्यस्मात् । निरपत्रपाणा निर्लज्जानाम् । इति सप्रणाम पश्यन् सूत्रधार आह—[अभिव्यक्ता इति ।]

पुलिन्देनाप्यग्निः किमु समिधमुन्मथ्य जनितो
हिरण्यश्रेणीनामपहरति नान्तःकलुषताम् ॥ ६ ॥

तदिदानीमभीष्टदेवं भगवन्तमनुस्मृत्य नृत्यमाधुरीमुल्लासयामि (इत्यञ्जलिं बद्ध्वा ।)

प्रपन्नमधुरोदयः स्फुरदमन्दवृन्दाटवी-
निकुञ्जमयमण्डपप्रकरमध्यबद्धस्थितिः ।
निरङ्कुशकृपाम्बुधिर्व्रजविहाररज्यन्मनाः
सनातनतनुः सदा मयि तनोतु तुष्टिं प्रभुः ॥ ७ ॥

पारिपार्श्विकः—भाव, पश्य ।

भक्तानामुदगादनर्गलधियां वर्गो निसर्गोज्ज्वलः
शीलैः पल्लवितः स बल्लववधूबन्धोः प्रबन्धोऽप्यसौ ।
लेभे चत्वरतां च ताण्डवविधेर्वृन्दाटवीगर्भभू-
र्मन्ये मद्विधपुण्यमण्डलपरीपाकोऽयमुन्मीलति ॥ ८ ॥

तत्त्वरस्व रसमाधुरीपरिवेषणाय ।

---

प्रकृत्या स्वभावेन लघुस्वरूपान्मत्तः सकाशादभिव्यक्ता इयं हरिगुणवर्णनमयी कृतिः विदग्ध[माधव]नाटकरूपका वो युष्मान् सिद्धार्थान् सिद्धमनोरथान् विधात्री । शीलार्थे तृन् । सरस्वती तु तद्दैन्यमसहमाना तं स्तौति । प्रकृष्टां कृतिं लघु शीघ्रं रूपयति निरूपयतीति । निबध्नातीत्यर्थः । तत्र दृष्टान्तः—अतिनीचजातिना पुलिन्देनापि समिधं काष्ठमुन्मथ्य जनितोऽग्निः सुवर्णश्रेणीनां अन्तःकलुषतां किं नापहरति । तथा च युष्माकमप्यन्तर्विरहदुःखमेषा कृतिरपहरत्येवेत्यर्थः ॥ ६ ॥ इत्युक्त्वा सूत्रधारः अञ्जलिं बद्ध्वा तन्त्रेण भगवतोऽग्रजस्य सनातनस्य च स्वस्मिन् तुष्टिमाशिषयति—[प्रपन्नेति ।] सनातनी नित्या तनुर्यस्य सः कृष्णः मयि तुष्टिं तनोतु । कथंभूतः । प्रपन्नो मधुरस्य शृङ्गाररसस्य उदयो यस्मात् । यस्य श्रीकृष्णस्य शरणापन्नः शृङ्गाररसोदय इत्यर्थः । पुनश्च सान्द्रकुञ्जमण्डपसमूहमध्ये बद्धा स्थितिर्यस्य । अग्रजपक्षे सनातननाम्नी तनुर्यस्य । प्रपन्नेषु जनेषु मधुरः करुणामय उदयो यस्य । व्रजविहारेण व्रजभ्रमणेन रज्यन्मनाः ॥ ७ ॥ पारिपार्श्विक आह—[भक्तानामिति ।] अनर्गलधियां भक्तानां वर्गः समूहः स्वरूपत एवोज्ज्वलः इत्यत्र क्रियासंबन्धं विनैव छेदः । एतेन भक्तानामिति तत्राप्यनर्गलधियामिति पात्रवैशिष्ट्यमुक्तम् । एवं बल्लववधूबन्धोः श्रीकृष्णस्य असौ विदग्धमाधवस्वरूपप्रबन्धोऽपि शीलैः स्वभावोक्त्यलंकारैः पल्लवितः विस्तारितः । तथा चात्र

सूत्रधारः—मारिष, नीरसावलीवैमुख्याद्विशङ्कमानो मन्थर इवास्मि ।

पारिपार्श्विकः—भाव, कृतमत्र शङ्कया । यतः ।

उदासतां नाम रसानभिज्ञाः कृतौ तवामी रसिकाः स्फुरन्ति ।
क्रमेलकैः काममुपेक्षितेऽपि पिकाः सुखं यान्ति परं रसाले ॥ ९ ॥

तदारभ्यतां सामाजिकचेतश्चमत्काराय गान्धर्वब्रह्मविद्या ।

सूत्रधारः—मारिष, पश्य पश्य ।

सोऽयं वसन्तसमयः समयाय यस्मि-
न्पूर्णं तमीश्वरमुपोढनवानुरागम् ।
गूढग्रहा रुचिरया सह राधयासौ
रङ्गाय संगमयिता निशि पौर्णमासी ॥ १० ॥

---

ग्रन्थे सर्वमेव वर्णन स्वभावोक्त्यलङ्कारमयमित्यर्थ । एतेन वस्तुवैशिष्ट्यमुक्तम् । एव वृन्दाटव्या रासपीठस्वरूपा गर्भभूमि ताण्डवविधेर्नृत्यविधेश्चत्वरतामङ्गन(ण)ता अर्थाभृत्यस्थलतां लेभे । एतेन देशवैशिष्ट्यमुक्तम् । कालवैशिष्ट्य तु वक्ष्यते—'सोऽय वसन्त–' (१।१०) इत्यादिना ॥८॥ तत्तस्मात् हे सूत्रधार, रसमाधुरीपरिवेषणाय त्वरस्व कालदेशपात्रवस्तूना वैशिष्ट्ये सति विलम्बो न युक्त. । सूत्रधार आह—हे मारिष, मत्कृतनाटकस्य श्रीकृष्णे जटिलादीना कटूक्तिघटितपरकीयारसप्रधानवर्णनमयत्वात्तच्छ्रवणेनैतत्साधुसभामध्यप्रविष्टाना नीरसश्रेणीना वैमुख्यान्मुखपरावर्तनाद्विशङ्कमानोऽहम् ॥ [उदेति ।] नाम प्राकाश्ये । रसानभिज्ञा उदासता उदासीना भवन्तु नवनाटकरूपकृतौ तु रसिका एव स्फुरन्ति । क्रमेलकैः उष्ट्रैः काम यथेष्ट उपेक्षितेऽपि रसाले आम्रे पर केवल पिका एव सुख यान्ति ॥९॥ अथात्र पौर्णमास्या वेषधारिण्या नट्या अन्त पटमध्यस्थितायाः नृत्यभूमौ प्रवेशार्थमर्थद्वयबोधकपद्य सूत्रधार आह—[सोऽयमिति ।] यस्मिन्वसन्तसमये असौ पौर्णमासी तिथिः निशि पूर्णं तस्या रजन्या ईश्वर चन्द्र रुचिरया राधया विशाखानक्षत्रेण सह सगमयिता रङ्गाय शोभार्थम् । 'राधा विशाखा' इत्यमर । प्रतिवैशाखपूर्णिमाया प्रायो विशाखानक्षत्रस्य सभवात् । चन्द्र कीदृशम् । उपोढ. प्राप्तो नवोऽनुगतो रागो रक्तिमा येन । पौर्णमासी कीदृशी । चन्द्रज्योत्स्नातिशयेन गूढा ग्रहा यस्याम् । पक्षे भगवती पौर्णमासी त प्रसिद्ध पूर्णमीश्वर श्रीकृष्ण रुचिरया शोभनया राधया सह सगमयिता रङ्गाय कौतुकरहस्यमाविष्कर्तु गूढो ग्रह आग्रहो यस्या. सा ॥ १० ॥ एतत्पद्यश्रवणेन सूत्रधारस्य राधया सह श्रीकृष्णसङ्गरूपद्वितीयार्थेऽभिप्राय बुद्ध्वान्त पटमध्ये स्थिता

(नेपथ्ये)

अये नर्तकसामन्तसार्वभौम, कथं भवतः कर्णपूरीभूता बाढं निगूढेयं संदर्भमञ्जरी, यदहं राधया सार्धमीश्वरं तं संगमयिष्यामीति।

**सूत्रधारः**—(सविस्मय नेपथ्याभिमुखमवलोक्य।) अहो, कथमित एव भगवती पौर्णमासी। पश्य पश्य।

वहन्ती काषायाम्बरमुरसि सान्दीपनिमुनेः
सवित्री सावित्रीसमरुचिरलं पाण्डुरकचा।
सुरर्षेः शिष्येयं परिजनवती नन्दभवना-
दितो मन्दं मन्दं स्फुटमुटजवीथीं प्रविशति॥ ११॥

तदावामप्यग्रतः करणीयं वर्णिकाङ्गीकारमालोचयावः।

(इति निष्क्रान्तौ।)

**प्रस्तावना।**

(ततः प्रविशति सपरिजना पौर्णमासी।)

**पौर्णमासी**—('अये नर्तकसामन्त–' इति पठित्वा।) हन्त वत्से नान्दीमुखि, किमपि कमनीयं गायता स्फुटमानन्दितास्मि नटेन्द्रेण।

---

नटरूपा पौर्णमासी आह। नेपथ्ये अन्तःपटमध्यरङ्गभूमौ वर्तमाना नटी आहेति शेषः। अये नर्तकसामन्तेषु नर्तकसेनापतिषु मध्ये सार्वभौम सर्वभूमौ विदित। अतिख्यात इत्यर्थः। यदहं राधया सह ईश्वरं संगमयिष्यामीति मम गूढा संदर्भरूपपुष्पमञ्जरी भवतः कथं कर्णपूरीभूता। तथा च मम एतादृशाभिप्रायस्त्वया कथं श्रुत इत्यर्थः॥ नेपथ्याभिमुखं रङ्गशालाद्वाराभिमुखमालोक्य सूत्रधार आह। 'नेपथ्यं रङ्गभूमौ स्यान्नेपथ्यं च प्रसाधने' इति विश्वः। वहन्तीति। उरसि वक्षःस्थले काषायाम्बरं वहन्ती पौर्णमासी मन्दं मन्दं यथा स्यात्तथा इतो नन्दभवनात् उटजवीथीं पर्णशालायाः पन्थानं प्रविशति। कथंभूता। सान्दीपनिमुनेः सवित्री माता। पुनश्च सावित्री ब्रह्मणः स्त्री तत्समरुचिः। अलं अतिशयेन श्वेतकेशा। सुरर्षेर्नारदस्य शिष्येयं नान्दीमुखीप्रभृतिपरिजनवती॥११॥ तत्तस्मात् हे नट, आवामग्रे करणीयं राधिकामधुमङ्गलाद्युचितवेषभूषाङ्गीकारं अन्तःपटमध्ये गत्वा आलोचयाव इत्युक्त्वा सभामध्यात्सूत्रधारनटौ निष्क्रान्तौ॥ 'अर्थस्य प्रतिपाद्यस्य तीर्थं प्रस्तावनोच्यते'। राधामाधवयोः सङ्गरूपप्रतिपाद्यार्थस्य घाट इति प्रसिद्धं तीर्थं प्रस्तावना उच्यते॥ पौर्णमासी ततः प्रविशति। ततो वदति। एवमेव सर्वत्र प्रथमान्तानां वदतिक्रियया संबन्धः। कमनीयं यथा स्यात्तथा। 'वहन्ती काषायाम्बरम्(१।११)इति पद्यं गायता

**नान्दी**—भअवदि, किं क्खु जहत्थं एदम् । (क)

**पौर्णमासी**—

संभाव्यते फलमलम्भितमूलपुष्टे-
स्तत्तादृशं क मम भाग्यतरोर्वरोरु ।
येनानयोः सुभगयोरुचिता भवेयं
शृङ्गारमाङ्गलिकयोर्नवसंगमाय ॥ १२ ॥

**नान्दी**—भअवदि, जइ विसहाणुणन्दिणी राहिआ तुए कण्हेण संगमणिज्जा, तदो संगमाणुऊलवासं गोउलं उज्झिअ सान्तणुवाससण्णे भाणुतित्थे किंति एसा संगोविअ रक्खिदा आसी । (ख)

**पौर्णमासी**—वत्से, नृशंसतः कंसभूपतेः शङ्कया ।

**नान्दी**—भअवदि, तहवि कहं रण्णा विण्णादा राही । (ग)

**पौर्णमासी**—राधासौन्दर्यवृन्दमेव विज्ञाने निदानम् । यतः ।

लोकोत्तरा गुणश्रीः प्रथयति परितो निगूढमपि वस्तु ।
पिहितामपि प्रयत्नाद्व्यनक्ति कस्तूरिकां गन्धः ॥ १३ ॥

---

(क) भगवति, किं खलु यथार्थमेतत् ।

(ख) भगवति, यदि वृषभानुनन्दिनी राधिका त्वया कृष्णेन सगमनीया, तदा संगमानुकूलवास गोकुल त्यक्त्वा सान्तनुवाससज्ञे भानुतीर्थे किमित्येषा सगोप्य रक्षितासीत् ।

(ग) भगवति, तदपि कथ राज्ञा विज्ञाता राधा ।

---

नटेन्द्रेण सूत्रधारेणाहमानन्दितास्मि ॥ राधया सह कृष्ण पौर्णमासी सगमयितेति सूत्रधारवाक्य किं यथार्थमित्यर्थः ॥ **संभाव्यत इति** । हे वरोरु नान्दीमुखि, मम भाग्यरूपवृक्षस्य राधामाधवयोः सङ्गसपादनरूप तादृश फल क सभाव्यते । कथभूतस्य । न लम्भित न प्रापित मूल प्रयोज्य कर्म पुष्टि येन भाग्यतरुणा तस्य । तथा च मम भाग्य वृक्षस्य मूलेऽलब्धपुष्टित्वात्कथ तादृश फल सभाव्यत इत्यर्थः । येन मूले लब्धपुष्टिना भाग्यतरुणा हेतुना शृङ्गारमाङ्गलिकयोरनयो राधाकृष्णयोर्नवसगमायाहमुचिता भवेयम् । शृङ्गाररसे मङ्गलमर्हत इति शृङ्गारमाङ्गलिकौ तयोः । 'तदर्हति' इति ठक् ॥ १२ ॥ **सान्तणुवासेति** । सान्तोआस इति प्रसिद्धः सान्तनुवासग्राम ॥ **नृशंसेति** । 'नृशसो घातुक क्रूर.' इत्यमरः ॥ **लोकोत्तरेति** । गुणश्रीर्गुणसपत्ति । यत्नात्पिहितामपि

**नान्दी**—भअवदि, जसोआधत्ताए मुहराए अत्तणो णत्तिणी राहिआ गोउलमज्झे आणिअ जडिला पुत्तस्स अहिमण्णुणो हत्थे उव्वाहिद त्ति, तादिसं जेव्व असमञ्जसं आपडिदम्। जं कण्हादो अण्णेण पुरिसेण तादिसीणं करपंसं सच्चम्, ता कहं तुमं णिच्चिन्ता विअ दीससि। (क)

**पौर्णमासी**—तस्यैव हेतोः।

**नान्दी**—कहं विअ। (ख)

**पौर्णमासी**—(विहस्य।) तद्वञ्चनार्थमेव स्वयं योगमायया मिथ्यैव प्रत्यायितम्, तद्विधानामुद्वाहादिकं नित्यप्रेयस्य एव खलु ताः कृष्णस्य।

**नान्दी**—(सहर्षम्।) ता नूनं तुमं णिच्चिन्तासि संवुत्ता, जं एसा अज्ज गोउलमज्झे आणीदा। (ग)

**पौर्णमासी**—वत्से, सत्यं ब्रवीषि। कंसतश्चिन्ता मे शैथिल्यमिवोपलब्धा, किं तु दुष्टाभिमन्युतः स्फुटमन्या सांप्रतमजनिष्ट।

**नान्दी**—केरिसी सा। (घ)

**पौर्णमासी**—

बल्लवीनवलतासु रङ्गिणं कृष्णभृङ्गमधिगत्य मत्सरी।
राधिकापुरटपद्मिनीमयं नेतुमिच्छति पुनर्वनान्तरम्॥ १४॥

(क) भगवति, यशोदाधात्र्या मुखरया आत्मनो नप्त्री राधिका गोकुलमध्य आनीय जटिला पुत्रस्याभिमन्योर्हस्ते उद्वाहितेति, तादृशमेवासमञ्जसमापतितम्। यस्मात्कृष्णतोऽन्येन पुरुषेण तादृशीनां करस्पर्शं सत्यम्, तस्मात्कथं त्वं निश्चिन्तेव दृश्यसे।

(ख) कथमिव।

(ग) तन्नूनं त्वं निश्चिन्तासि संवृत्ता, यदेषाद्य गोकुलमध्य आनीता।

(घ) कीदृशी सा।

---

कस्तूरिकां गन्ध एव व्यनक्ति॥ १३॥ **उव्वाहिदेति**। तथा च कंसस्य राधया सह विवाहशङ्काभावेनाधुना भीतिर्न कार्येति भावः॥ **ता नूनमिति**। तन्नूनं वादमतिशयेन निश्चिन्ता असि संवृत्ता निश्चिन्ता संवृत्ता असि। निश्चिन्ता बभूवेत्यर्थः। यदेषा गोकुलमध्य आनीता॥ **सांप्रतमिति**। सांप्रत अन्या शङ्का अजनिष्ट॥ **केरिसी सेति**। शङ्केति शेषः॥ **वल्लवीति**। पक्षे मत्सरी अभिमन्युः। कृष्ण एव भृङ्गस्तु कृष्णवर्ण-

**नान्दी**—तत्थवि जोअमाआ ज्जेव्व समाहाणं करिस्सदि । (क)

**पौर्णमासी**—पुत्रि, को जानाति स्वतन्त्रायास्तस्याश्चरितम्, यदीदृशेऽर्थे सा तटस्थायते ।

**नान्दी**—अण्णो वा एत्थ कोवि उवाओ त्थि जेण एसो पडिबद्धो भवे । (ख)

**पौर्णमासी**—वत्से, तत्र मया प्रतिभुवा भवन्त्या युक्तिमाधुरीमेदुरेण वागर्गलेन निसर्गादगम्भीरोऽय विष्कम्भितोऽस्ति ।

**नान्दी**—(सहर्षम् ।) भअवदि, कंसस्स गोमण्डलज्झक्खो गोअड्डणो कण्हाणुसारिणा चन्दाअलिचरित्तेन कीसं न कुप्पइ । (ग)

**पौर्णमासी**—पुत्रि, राजकुलोपलब्धेन गौरवेण गर्वितोऽयं व्यक्तमपि तन्न श्रद्धाति ।

**नान्दी**—कह कण्हेण पढमंसे सगमो संवुत्तो । (घ)

**पौर्णमासी**—पुत्रि, सगमे खलु गाढानुरागितैव दूती बभूव । मद्यमाना केवलमजनिष्ट पिष्टपेषिता ।

---

(क) तत्रापि योगमायैव समाधान करिष्यति ।

(ख) अन्यो वात्र कोऽप्युपायोऽस्ति येन प्रतिबद्धो भवेत् ।

(ग) भगवति, कसस्य गोमण्डलाध्यक्षो गोवर्धन कृष्णानुसारिणा चन्द्रावलीचरित्रेण कस्मान्न कुप्यति ।

(घ) कथ कृष्णेन प्रथमाशे सगम सवृत्त ।

---

भृङ्ग च । पुरटपद्मिनीं कनकवर्णा पद्मिनीम् । वनान्तर मधुवनम् । मधुरामित्यर्थ । कमलिनीपक्षे जलवाचकत्वेन वनशब्द श्लिष्टस्तथा च जलान्तरमित्यथ ॥ १४ ॥ **यदिति** । ईदृशे एतादृशे अर्थे कार्यसपादने तटस्थैव भवति न समाधत्ते । क्वचिदभिसारादौ ताटस्थ्यदर्शनादत्रापि सभाव्यते चेति पौर्णमास्या हृदयम्, ततश्चान्तरान्तरा तस्यास्ताटस्थ्य तु रसपुष्ट्यर्थं शङ्कामर्षादिप्रयोजकमिति सगमनीयम् । अत्र पाठान्तर तु श्रीरूपगोस्वामिन स्वाक्षरपुस्तकेऽदृष्टत्वान्न समतमिति । (**प्रतिबद्धो भवेदिति** । मथुरागमनान्निवृत्तो भवेदित्यथ ) ॥ **वत्से इति** । कृष्णेन सह राधाया दर्शनसभावनापि न भविष्यति इत्यत्रार्थे 'जामिन' इति प्रसिद्ध्या प्रतिभुवा भवन्त्या मया स्निग्धेन वाक्यरूपार्गलेन स्वभावत एव अगम्भीरोऽयमभिमन्यु विष्कम्भितोऽस्ति । मथुरागमनान्निवर्तितोऽस्तीत्यर्थ ॥ **अयमिति** । अय गोवर्धनमल्लस्तत्कृष्णेन सह सगमन व्यक्त-

**नान्दी**—अज्जे, तुद कहं एरिसी भाअविसेसभाविदा ‥
उप्पणा, जं अप्पणो अदिट्ठदेअम्हि अणुप्पण्णे कण्हे उज्जइणीं
पढमं ज्जेअ गोउलं लद्धासि । (क)

**पौर्णमासी**—पुत्रि, गुरुपादानामुपदेशप्रसादेन ।

**नान्दी**—एत्थ वसन्तीं तुमं महाभाओ संदीवणी किं क्खु जाणा

**पौर्णमासी**—अथ किम् । यतस्तेन मधुमङ्गलाभिधः सुतो
परिचर्यार्थं प्रेषितः ।

**नान्दी**—महुमङ्गलो तुए सुट्ठु अणुग्गहिदो जं एसो णन्द
न्दीअरचन्दस्स सहअरदा महूसवे णिउत्तो । (ग)

**पौर्णमासी**—पुत्रि, मम सर्वस्वरूपाया राधायाः कृष्णे
विस्ताराय त्वं च नियुज्यसे ।

**नान्दी**—(सानन्दम् ।) भअवदि, अदिभूमिं गदो से कण्हे अनुराओ

**पौर्णमासी**—कथमेतल्लक्षितम् ।

**नान्दी**—जदा कहापसङ्गे एसा कण्हत्ति णामं सुणादि, तदा रो
ञ्चिदा कंपि भाअं विन्दइ । (ङ)

(क) आर्ये, तव कथमीदृशी भावविशेषभाविता गाढानुरागितोत्पन्ना, यदा
त्मनोऽमीष्टदेवेऽनुत्पन्ने कृष्णे उज्जयिनीं त्यक्त्वा प्रथममेव गोकुलं लब्धासि ।
(ख) अत्र वसन्तीं त्वां महाभागः सादीपनिः किं खलु जानाति ।
(ग) मधुमङ्गलस्त्वया सुष्ठु अनुगृहीतो यदेष नन्दनयनेन्दीवरचन्द्रस्य सह-
चरता महोत्सवे नियुक्तः ।
(घ) भगवति, अतिभूमिं गतोऽस्याः कृष्णेऽनुरागः ।
(ङ) यदा कथाप्रसङ्गे एषा कृष्णेति नाम शृणोति, तदा रोमाञ्चिता कमपि
भाव विन्दति ।

मपि न श्रद्दधाति ॥ **आर्य इति** । तथा च श्रीकृष्णस्योत्पत्तेः पूर्वमेव तव वसति-
स्थान उज्जयिनीं त्यक्त्वा कथं गोकुलं लब्धासीत्यर्थः ॥ **पुत्रीति** । गुरुर्नारदस्तस्य
कृष्णस्य जन्म भविष्यतीत्युपदेशरूपप्रसादेन ॥ **अथेति** । अथ किम् । स तु जानाती-
त्यर्थः ॥ **मधिवति** । तेन मयि सेविकाया भाग्यहीनाया तादृशमनुग्रहं न करोषीति
भावः ॥ तदेवाभिप्रेत्याह—**पुत्रीति** ॥ **भअवदीति** । अतिभूमिं अत्युत्कर्षम् ॥ जदेति

**पौर्णमासी**—पुत्रि, युक्तमिदम्। तथा हि।

तुण्डे ताण्डविनी रतिं वितनुते तुण्डावलीलब्धये
कर्णक्रोडकडम्बिनी घटयते कर्णार्बुदेभ्यः स्पृहाम्।
चेतः प्राङ्गणसङ्गिनी विजयते सर्वेन्द्रियाणां कृतिं
नो जाने जनिता कियद्भिरमृतैः कृष्णेति वर्णद्वयी॥ १५॥

**नान्दी**—अज्जे, दोहिं ललिदाविसाहाहिं सहीहिं सद्धं राहा सूरं आराहेहि। चन्दाअली उण पउमासेव्वापहुदीहिं सद्धं चण्डिअम्। ता तक्केमि देअदापसाअणिप्पादिओ इमाणं इरिसो कण्हे अणुराओ। (क)

**पौर्णमासी**—

दैवतसेवा केवलमिह वनयात्रानुसारिणी मुद्रा।
व्रजसुभ्रुवां तु कृष्णे सहजः प्रेमा स जागर्ति॥ १६॥

**नान्दी**—सच्चं राहीए साहाविअं चेअ पिम्मं तत्थवि सहीणं कोसलं उद्दीअणम्। (ख)

**पौर्णमासी**—पुत्रि, मद्गिरा संदिश्यतामालेख्यविचक्षणा विशाखा यथेयं स्वसखीनेत्रारविन्दयोरानन्दनाय नन्दसूनोः प्रतिच्छन्दं निर्माति।

---

(क) आर्ये, द्वाभ्यां ललिताविशाखाभ्यां सखीभ्यां सार्धं राधा सूर्यमाराधयति। चन्द्रावली पुनः पद्मशैव्याप्रभृतिभिः सार्धं चण्डिकाम्। तस्मात्तर्कयामि देवताप्रसादनिष्पादित आसामीदृशः कृष्णेऽनुरागः।

(ख) सत्यं राधायाः स्वाभाविकमेव प्रेम तथापि सखीनां कौशलमुद्दीपनम्।

---

विन्दति प्राप्नोति॥ **तुण्डे इति**। कृष्णेति वर्णद्वयी यदा तुण्डे मुखे ताण्डव नाट्यं तत्कुर्वती नटीव भवति, तदा सा तुण्डावलीलब्धये रतिं वितनुते, किमेकेन मुखेन तुण्डसमूहश्चेल्लभ्यते तर्हि सुखेन कृष्णकीर्तनं क्रियत इति भावः। कर्णक्रोडे कडम्बिनी अङ्कुरवती। जाताङ्कुरेत्यर्थः। **चेतः प्राङ्गणेति**। कर्णद्वारा चित्ते प्रवेशमात्रादेव सर्वेन्द्रियाणां कृतिं व्यापारं विजयते पराभवति। आनन्दातिशयेन प्रश्रयो जात इति भावः। उत्कर्षार्थेऽकर्मकः पराभवार्थे सकर्मको जिधातुः॥१५॥ **दैवतेति**। आसां वनगमनार्थं देवतासेवनं छलमात्रमित्यर्थः॥१६॥ **पुत्रीति**। आलेख्यं चित्रं तस्मिन् विचक्षणा विशाखा मद्वाक्येन संदिश्यताम्। संपूर्वदिशधातुः 'संदेश' इत्यर्थे प्रसिद्धः। 'प्रतिच्छन्दं चित्रपटम्'॥

**नान्दी**—अज्जे, तुह कहं एरिसी भाअविसेसभाविदा गाढाणुराइदा उप्पणा, जं अप्पणो अहिट्ठदेअम्हि अणुप्पण्णे कण्हे उज्जइणीं उज्झिअ पढमं चेअ गोउलं लद्धासि । (क)

**पौर्णमासी**—पुत्रि, गुरुपादानामुपदेशप्रसादेन ।

**नान्दी**—एत्थ वसन्तीं तुमं महाभाओ संदीवणी किं क्खु जाणादि।(ख)

**पौर्णमासी**—अथ किम् । यतस्तेन मधुमङ्गलाभिधः स्वपुत्रो ममात्र परिचर्यार्थं प्रेषितः ।

**नान्दी**—महुमङ्गलो तुए सुट्ठु अणुग्गहिदो जं एसो णन्दणअणिन्दीअरचन्दस्स सहअरदा महूसवे णिउत्तो । (ग)

**पौर्णमासी**—पुत्रि, मम सर्वस्वरूपाया राधायाः कृष्णेऽनुरागविस्ताराय त्वं च नियुज्यसे ।

**नान्दी**—(सानन्दम् ।) भअवदि, अदिभूमिं गदो से कण्हे अनुराओ।(घ)

**पौर्णमासी**—कथमेतल्लक्षितम् ।

**नान्दी**—जदा कहापसङ्गे एसा कण्हत्ति णामं सुणादि, तदा रोमाञ्चिदा कंपि भाअं विन्दइ । (ङ)

---

(क) आर्ये, तव कथमीदृशी भावविशेषभाविता गाढानुरागितोत्पन्ना, यदात्मनोऽभीष्टदेवेऽनुत्पन्ने कृष्णे उज्जयिनीं त्यक्त्वा प्रथममेव गोकुलं लब्धासि ।

(ख) अत्र वसन्तीं त्वां महाभागः सांदीपनिः किं खलु जानाति ।

(ग) मधुमङ्गलस्त्वया सुष्ठु अनुगृहीतो यदेष नन्दनयनेन्दीवरचन्द्रस्य सहचरता महोत्सवे नियुक्तः ।

(घ) भगवति, अतिभूमिं गतोऽस्याः कृष्णेऽनुरागः ।

(ङ) यदा कथाप्रसङ्गे एषा कृष्णेति नाम शृणोति, तदा रोमाञ्चिता कमपि भावं विन्दति ।

---

मपि न श्रद्धाति ॥ **आर्ये इति** । तथा च श्रीकृष्णस्योत्पत्तेः पूर्वमेव तव वसतिस्थानं उज्जयिनीं त्यक्त्वा कथ गोकुलं लब्धासीत्यर्थः ॥ **पुत्रीति** । गुरुर्नारदस्तस्य कृष्णस्य जन्म भविष्यतीत्युपदेशरूपप्रसादेन ॥ **अथेति** । अथ किम् । स तु जानातीत्यर्थः ॥ **मधुमेति** । तेन मयि सेविकाया भाग्यहीनायाः तादृशमनुग्रहं न करोतीति भावः ॥ तदेवाभिप्रेत्याह—**पुत्रीति** ॥ **भअवदीति** । अतिभूमिं अत्युत्कर्षम् ॥ **जदेति** ।

**पौर्णमासी**—पुत्रि, युक्तमिदम् । तथा हि ।

तुण्डे ताण्डविनी रतिं वितनुते तुण्डावलीलब्धये
कर्णक्रोडकडम्बिनी घटयते कर्णार्बुदेभ्यः स्पृहाम् ।
चेतः प्राङ्गणसङ्गिनी विजयते सर्वेन्द्रियाणां कृतिं
नो जाने जनिता कियद्भिरमृतैः कृष्णेति वर्णद्वयी ॥ १५ ॥

**नान्दी**—अज्जे, दोहिं ललिदाविसाहाहिं सहीहिं सद्धं राहा सूरं आराहेहि । चन्दाअली उण पउमासेव्वापहुदीहिं सद्धं चण्डिअम् । ता तक्केमि देअदापसाअणिप्पादिओ इमाणं इरिसो कण्हे अणुराओ । (क)

**पौर्णमासी**—

दैवतसेवा केवलमिह वनयात्रानुसारिणी मुद्रा ।
व्रजसुभ्रुवां तु कृष्णे सहजः प्रेमा स जागर्ति ॥ १६ ॥

**नान्दी**—सच्चं राहीए साहाविअं चेअ पिम्मं तत्थवि सहीणं कोसलं उद्दीअणम् । (ख)

**पौर्णमासी**—पुत्रि, मद्गिरा संदिश्यतामालेख्यविचक्षणा विशाखा यथेयं स्वसखीनेत्रारविन्दयोरानन्दनाय नन्दसूनोः प्रतिच्छन्दं निर्मीति ।

---

(क) आर्ये, द्वाभ्यां ललिताविशाखाभ्यां सखीभ्यां सार्धं राधा सूर्यमाराधयति । चन्द्रावली पुनः पद्माशैव्याप्रभृतिभिः सार्धं चण्डिकाम् । तस्मात्तर्कयामि देवताप्रसादनिष्पादित आसामीदृशः कृष्णेऽनुरागः ।

(ख) सत्यं राधायाः स्वाभाविकमेव प्रेम तथापि सखीनां कौशलमुद्दीपनम् ।

---

विन्दति प्राप्नोति ॥ **तुण्डे इति** । कृष्णेति वर्णद्वयी यदा तुण्डे मुखे ताण्डव नाट्यं तत्कुर्वती नटीव भवति, तदा सा तुण्डावलीलब्धये रतिं वितनुते, किमेकेन मुखेन तुण्डसमूहश्चेल्लभ्यते तर्हि सुखेन कृष्णकीर्तनं क्रियत इति भावः । कर्णक्रोडे कडम्बिनी अङ्कुरवती । जाताङ्कुरेत्यर्थः । **चेतः प्राङ्गणेति** । कर्णद्वारा चित्ते प्रवेशमात्रादेव सर्वेन्द्रियाणां कृतिं व्यापारं विजयते पराभवति । आनन्दातिशयेन प्रश्रयो जात इति भावः । उत्कर्षार्थेऽकर्मकः पराभवार्थे सकर्मको जिधातुः ॥१५॥ **दैवतेति** । आसा वनगमनार्थं देवतासेवनं छलमात्रमित्यर्थः ॥१६॥ **पुत्रीति** । आलेख्यं चित्र तस्मिन् विचक्षणा विशाखा मद्वाक्येन संदिश्यताम् । समपूर्वदिशधातुः 'संदेश' इत्यर्थे प्रसिद्धः । 'प्रतिच्छन्दं चित्रपटम्' ॥

नान्दी—जह आणवेदि भअवदी। (क)

पौर्णमासी—मयापि मोदकवृन्ददानापदेशाद्वृन्दाटवीमध्यमासाद्य राधेति मङ्गलाक्षरमाधुर्येण माधवकर्णयोर्द्वन्द्वमानन्दनीयम्।

नान्दी—अज्जे, पेक्ख एसो राममहुमङ्गलसिरिदामपहुदीहिं सहअरेहिं सद्धं गोउलादो णिक्कमिअ वुन्दावनं गच्छन्तो कण्हो सिणिद्धेहिं पिदरेहिं जसोआनन्देहिं लालिज्जइ। (ख)

पौर्णमासी—(विलोक्य। सहर्षम्।)

अयं नयनदण्डितप्रवरपुण्डरीकप्रभः
प्रभाति नदजागुडप्रजविडम्बिपीताम्बरः।
अरण्यजपरिष्क्रियादमितदिव्यवेषादरो
हरिन्मणिमनोहरद्युतिभिरुज्वलाङ्गो हरिः॥ १७॥

तदहं मोदकसंपादनाय गच्छेयम्। त्वं विशाखां याहि।

(इति निष्क्रान्ते।)

विष्कम्भकः।

---

(ततः प्रविशति यथानिर्दिष्टः कृष्णः।)

श्रीकृष्णः—(पुरस्तादवलोक्य। सानन्दम्।)

श्रेणीभूतवपुः श्रियामभिमुखे गोमण्डलीनां क्रमा-
दासां स्फाटिकगण्डशैलपटलीपाण्डुत्विषां व्याजतः।

---

(क) यथाज्ञापयति भगवती।

(ख) आर्ये, पश्यैष राममधुमङ्गलश्रीदामप्रभृतिभिः सहचरैः सार्धं गोकुलान्निष्क्रम्य वृन्दावनं गच्छन्कृष्णः स्निग्धाभ्यां पितृभ्यां यशोदानन्दाभ्यां लाल्यते।

---

मयेति। अपदेशात् छलात्॥ अयमिति। अयं श्रीकृष्णः प्रभाति। जागुडं कुङ्कुमं तस्य प्रजः समूहः। परिष्क्रिया अलङ्कारः। 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम्,' 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इत्यमरः॥ १७॥ विष्कम्भकेति। 'भवेद्विष्कम्भको भाविभूतवस्तवंशसूचकः'॥ यथेति। यथानिर्दिष्टः कृष्णः प्रविशति। कृष्णः सानन्दं आह—श्रेणीति। गोमण्डलीनां व्याजतः मन्दाकिनी स्वर्गङ्गा इन्द्रपुरादभिमुखे चस्कन्द।

शङ्के ज्ञातगुणा पुरंदरपुरादवस्कन्द मन्दाकिनी
वृन्दारण्यविहारिधन्ययमुनासेवाप्रमोदार्थिनी ॥ १८ ॥

नन्दः—वत्स, साधु वर्णितम्। किं तु गोष्ठलक्ष्मीरपि पृष्ठतः प्रेक्ष्यतामिति। (परावृत्य।)

विशालैर्गोशालैर्बहुशिखरशाखाविततिभिः
परीतैः संबाधीकृतसविधमम्भोधिगहनम्।
समृद्धामागोवर्धनकटकमाकालियह्रदं
श्रियं बिभ्रद्गोष्ठं स्फुरति परितस्तावकमिदम् ॥ १९ ॥

कृष्णः—सखे मधुमङ्गल, दूरमनुयातोऽसि तातेन। तदविलम्बमम्बया सार्धं गोष्ठं प्रविश्यताम्।

यशोदा—जाद, किंति अवरण्हे वि गोट्ठं ण सुमरसि जं परमादरेण मए रन्धिदाइ पच्चहं सीअलीहोन्ति मिट्ठणाइं। (क)

मधुमङ्गलः—गोउलेसरि, सुणाहि। (ख) (इति संस्कृतेन।)

गोभ्यः शपे किमपि दूषणमस्य नास्ति

(इति वाग्रुपक्रमे कृष्णः सस्नेहमेन पश्यति।)

मधुमङ्गलः—

ताभिर्यदेष रभसादभिकृष्यमाणः।

---

(क) जात, किमित्यपराह्णेऽपि गोष्ठ न स्मरसि, यत्परमादरेण मया रन्धितानि प्रत्यहं शीतलीभवन्ति मिष्टान्नानि।

(ख) गोकुलेश्वरि, शृणु।

---

आगतेत्यर्थः। इति शङ्के। कथभूता। वृन्दारण्यविहारिण्या यमुनाया सेवाजन्यप्रमोद एव अर्थो यस्याः सा ॥१८॥ **विशालैरिति**। बहूना शिखराणा गृहाग्राणां शाखाना गृहप्रान्ताना विततयो विस्तारास्ताभिः परीतैः व्याप्तैः गोशालैः सबाधीकृत सकीर्णीकृत सविध समीप यस्य तत्। पुनः कीदृश गोष्ठम्। आगोवर्धनकटक गोवर्धननितम्बमभिव्याप्य। 'कटकोऽस्त्री नितम्बोऽद्रे' इत्यमरः। आकालियह्रद कालियह्रदपर्यन्तम्। समृद्धा समृद्धिमतीम्। श्रिय शोभाम्। बिभ्रत् धारयत् पुष्यद्वा ॥ १८ ॥ **सख इति**। तातेन दूरमहमनुयातोऽस्मि। पिता दूर मम। पश्चादागच्छतीत्यर्थः ॥ **गोभ्य इति**।

कुञ्जं विशत्यधिककेलिकलोत्सुकाभिः

(इति वाग्घसमाप्ती)

**कृष्णः**—(सापत्रपमात्मगतम्।) व्यक्तमेष बालिशो बल्लवीभिरिति वक्ष्यति। तदेनं संज्ञया निवारयामि। (इति शिरस्शिरो धूनयति।)

**मधुमङ्गलः**—भो वअस्स, किंति मं निवारेसि जं णिच्चिदं अज्ज अज्जाया अग्गदो एदं विण्णविस्सम्। (क)

**कृष्णः**—(स्वगतम्।) हन्त, लज्जाजाले जाल्मधियाहं पातितोऽस्मि।

**मधुमङ्गलः**—

पीताम्बरस्त्वरितमम्ब सुहृद्धटाभिः॥ २०॥

**कृष्णः**—(सानन्दमात्मगतम्।) कथमन्यदेवास्य हृद्गतम्।

**यशोदा**—वच्छ महुमङ्गल, सच्चं ललिदापहुदीओ ओववालिआओ अ मह इदं कहेन्ति ता डिम्भए हदम्हि। (ख)

**नन्दः**—कुटुम्बिनि, कच्चिदनुरूपा निरूपितास्ति गोकुले काचिद्बालिका यामुद्वाहयामो वत्सम्।

**यशोदा**—अज्ज, दुद्धमुहस्स वच्छस्स दाणिं को क्खु उवाहाओसरो। (ग)

**मधुमङ्गलः**—(अपवार्य।) वअस्स, सच्चं दुद्धमुहोऽसि जं दुद्धलुद्धाइं गोवकिसोरीसहस्साइं तुज्झ मुहं पिअन्ति। (घ)

---

(क) भो वयस्य, किमिति मां निवारयसि यन्निश्चितमद्य आर्याया अग्रत इदं विज्ञापयिष्यामि।

(ख) वत्स मधुमङ्गल, सत्यं ललिताप्रभृतयो गोपबालिकाश्च मम इदं कथयन्ति तद्डिम्भैर्हृतास्मि।

(ग) आर्य, दुग्धमुखस्य वत्सस्येदानीं कः खलु उद्वाहावसरः।

(घ) वयस्य, सत्यं दुग्धमुखोऽसि यद्दुग्धलुब्धानि गोपकिशोरीसहस्राणि तव मुखं पिबन्ति।

---

गोभ्यः पापे गवां शपथं करोमि। ताभिः प्रसिद्धाभिः। रभसात् हर्षात्। कुञ्जं प्रविशतीति योज्यम्। 'रभसो हर्षवेगयोः' इति विश्वः॥ २०॥ व्यक्तमिति। बालिशो मूर्खः। 'संज्ञा स्यावेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमरः॥ हन्तेति। 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः॥ अपेति। रहस्यमन्यस्मै यन्निभृतं कथ्यते तत्र अपवार्येति नाट्यो-

(कृष्णः स्मितं करोति ।)

**नन्दः**—वत्स, पश्य पश्य ।

अहह कमलगन्धैरत्र सौन्दर्यवृन्दे
विनिहितनयनेयं त्वन्मुखेन्दोर्मुकुन्द ।
कुचकलशमुखाभ्यामम्बरक्रोपमम्बा
तव मुहुरतिहर्षाद्वर्षति क्षीरधाराम् ॥ २१ ॥

(इति कृष्णमालिङ्ग्य सानन्दम् ।)

जितचन्द्रपरागचन्द्रिकानलदेन्दीवरचन्दनश्रियम् ।
परितो मयि शैत्यमाधुरीं वहति स्पर्शमहोत्सवस्तव ॥ २२ ॥

**कृष्णः**—तात, बुभुक्षाक्रुष्टमपि मत्प्रतीक्षया स्वयं तस्तम्भे गोकदम्बकम् । तन्निवर्तेतां तत्रभवन्तौ ।

**नन्दः**—यथाह वत्सः । (इति सस्नेहं कृष्णमवलोकयन्सभार्यो निष्क्रान्तः ।)

**कृष्णः**—(पुरोऽवलोक्य ।)

सुगन्धौ माकन्दप्रकरमकरन्दस्य मधुरे
विनिस्यन्दे बन्दीकृतमधुपवृन्दं मुहुरिदम् ।
कृतान्दोलं मन्दोन्नतिभिरनिलैश्चन्दनगिरे-
र्ममानन्दं वृन्दाविपिनमतुलं तुन्दिलयति ॥ २३ ॥

**रामः**—श्रीदामन्, पश्य पश्य ।

वृन्दावनं दिव्यलतापरीतं लतास्तु पुष्पस्फुरिताग्रभाजः ।
पुष्पाण्यपि स्फीतमधुव्रतानि मधुव्रताश्च श्रुतिहारिगीताः ॥ २४ ॥

---

क्तिः । तथा च यशोदामश्रावयित्वैव कृष्ण प्रत्याह । यथोक्तम्—'रहस्य कथ्यतेऽन्यस्य पराकूतस्यवारितम्' इति ॥ *अहहेति* । कमलस्येव गन्धोऽस्येति । 'उपमानाच्च' इति इच् समासान्तः । अम्बरं वस्त्रम् । क्रोप क्रोपयित्वा । आर्द्रीकृत्येत्यर्थः । 'चेलेः क्रोपेः' इति णमुल् ॥ **जितेति** । चन्द्रपरागस्य कर्पूरस्य । नलदस्य वीरणमूलस्य ॥ गोकदम्बक गोसमूहः । तत्र पूर्ववच्छब्दप्रयोगः सादरयुष्मदर्थे ॥ **सुगन्धाविति** । कथभूत वृन्दाविपिनम् । माकन्दप्रकरस्य आम्रसमूहस्य यो मकरन्दस्तस्य सुगन्धौ मुहुर्बन्दीकृत मधुपवृन्द येन । तथा च वन्दीजनो गुणवन्तं राजान यथा स्तुवन्ति तथैव भ्रमरोऽपि तुन्दिलयति

कृष्णः—सखे मधुमङ्गल, भवद्विधानामासक्तिशंसिभिर्वंशीगीतैरानन्दयामि वृन्दाटवीवास्तव्यान्। (हलधरे वेणुं विन्यस्यति।)

रामः—(साश्चर्यम्।) हन्त, परस्परविपर्यस्तस्वभावानामपि भावानां धर्मविपर्ययः पश्यत।

जातस्तम्भतया पयांसि सरितां काठिन्यमापेदिरे
ग्रावाणो द्रवभावसंवलनतः साक्षादमी मार्दवम्।
स्थैर्यं वेपथुना जहुर्भुरगाश्चाञ्चल्यमाद्धति जङ्गमा
वंशी चुम्बति हन्त यामुनतटीक्रीडाकुटुम्बे हरौ॥ २५॥

मधुमङ्गलः—ही ही अच्चरिअम्।

पउरदरगअन्दच्छीरफलोल्लिणीहिं
णअगुरुमलदाणं हन्त सेअं कुणन्ती।
पिविअ महुरवंसीणादपीऊसपूरं
फुरइ गअगभीरस्सासम्भिदा धेणुपत्ती॥ २६॥

([illegible]) भो पिअवअस्स, कीस णिम्भरं गज्जावेसि। एदाए क्खु वेणुणादीए एसा उम्मादिआ पउरी। एत्थ उण णिमित्तमेअं वत्तु तुमम्। (क)

(आकाशे ।)

रुन्धन्नम्बुभृतश्चमत्कृतिपरं कुर्वन्मुहुस्तुम्बुरुं
ध्यानादन्तरयन्सनन्दनमुखान्विस्मापयन्वेधसम् ।
औत्सुक्यावलिभिर्बलिं चटुलयन्भोगीन्द्रमाघूर्णय-
न्भिन्दन्नण्डकटाहभित्तिमभितो बभ्राम वंशीध्वनिः ॥ २७ ॥

**रामः**—(सहर्षम् । ऊर्ध्वमवलोक्य स्वगतम् ।) कथं मेघान्तरितोऽयं सुरर्षिः पद्यमुपवीणयामास ।

(पुनराकाशे कलकलः ।)

**मधुमङ्गलः**—(ऊर्ध्वमवलोक्य सभयम् ।) अव्वम्हण्णं अव्वम्हण्णम् । भो भो, पलाअम्ह पलाअम्ह । (क)

**श्रीदामा**—वाउल, किंति णिरग्गलं पलवसि । (ख)

**मधुमङ्गलः**—(ऊर्ध्वमवलोक्य । सभयम् ।) अरे मुक्ख गोआलिआ, किं ण पेक्खसि । एसो समारूढहंसो णग्गेण भुअङ्गधारिणा केणवि वेदालेण सद्धं चउम्मुहो को वि जक्खो रक्खसो वा आअच्छदि । (पुनर्वीक्ष्य सोत्कम्पम् ।) ही माणहे, एदे अ अच्छीहिं पूरिदसव्वङ्गं कंपि दाणअं अग्गेफदुअ अवरे असुरा गअणं आक्कमन्ति । ता संकेमि हदकंसस्स किंकरा हुविस्सन्दि । (इति सत्रासं कृष्णकक्षान्तरे शिरस्तिरयति ।) (ग)

**कृष्णः**—(स्वगतम् ।) कथमेते वेणुनादमाधुरीभिराकृष्टाः पयोदवीथीमवगाहन्ते दिशामधीशाः । (इति पुनर्वेणु क्वणयति ।)

---

(क) अब्रह्मण्यमब्रह्मण्यम् । भो भोः, पलायामहे पलायामहे ।

(ख) वातुल, किमिति निरर्गलं प्रलपसि ।

(ग) अरे मूर्ख गोपाल, किं न पश्यसि । एष समारूढहंसो नग्नेन भुजङ्गधारिणा केनापि वेतालेन सार्धं चतुर्मुखः कोऽपि यक्षो राक्षसो वागच्छति । ही मन्यामहे, एते चाक्षिभिः पूरितसर्वाङ्ग कमपि दानवमग्रेकृत्य अपरेऽसुरा गगनमाक्रमन्ति । तच्छङ्के हतकंसस्य किंकरा भविष्यन्ति ।

---

नदी ॥ **रुन्धन्निति** । तुम्बुरु नारदस्य सहचरम् ॥ उपवीणयामास वीणया जगौ । 'सत्यापपाश–'इत्यादिना णिच् ॥ अब्रह्मण्य अवध्या वयम् । 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः ॥ **ही माणहे इति** । ही विस्मये माणहे मन्यामहे ॥ **सत्रासमिति** । भयात्क-

मधुमङ्गलः—(विलोक्य सोच्छ्वासमात्मगतम् ।) एदे दुट्ठदाणआ वअस्सस्स वेणुसद्दमेत्तेण भेम्हला भविअ सज्झसेण मुज्झन्ति । ता जीइदो म्हि । (इति साटोप परिक्रम्य प्रकाशम् ।) रे रे दुट्ठा असुरा, चिट्ठध चिट्ठध । एसो हं सावेण चावेण वा तुह्माणं मुण्डाइं खण्डेमि । (इति दण्डमुद्यम्य मुहुरूर्ध्वं कूर्दति ।) (क)

रामः—(विहस्य ।) वयस्य, मैवं ब्रवीः । एतौ भगवन्तौ हरहिरण्यगर्भौ । सव्यतश्चामी पुरंदरादयो वृन्दारकाः ।

मधुमङ्गलः—सुट्ठु । (समाश्वस्य ।) भो, जाणन्तेण च्चेअ मए एदं परिहसिदम् । तदो तुम्हेहिं क्खु रक्खसबुद्धीए भीलुएहिं पलाइदुं पउत्तम् । (ख)

कृष्णः—(स्मित्वा ।) हंहो देवानां प्रिय, निजामेव जाल्मतां तासु संक्रामयसि ।

रामः—पश्यत पश्यत ।

अष्टाभिः श्रुतिपुटकैर्नववैणवकाकलीं कलयन् ।
शतधृतिरपि धृतिमुक्तो मरालपृष्ठे मुहुर्लुठति ॥ २८ ॥

(आकाशे पुनर्वीणागीतिः ।)

उदिते हरिवक्त्रेन्दौ वेणुनादसुधामुचि ।
हन्त रुद्रसमुद्रेण स्वमर्यादा विलङ्घिता ॥ २९ ॥'

रामः—

सोत्कण्ठं मुरलीकलापरिमलानाकर्ण्य घूर्णत्तनो-
रेतस्याक्षिसहस्रतः सुरपतेरश्रूणि सस्रुर्मुचम् ।

(क) एते दुष्टदानवा वयस्यस्य वेणुशब्दमात्रेण विह्वला भूत्वा साध्वसेन मुह्यन्ति । तज्जीवितोऽस्मि । रे रे दुष्टा असुराः, तिष्ठत तिष्ठत । एषोऽहं शापेन चापेन वा युष्माकं मुण्डानि खण्डयामि ।

(ख) सुष्ठु । भोः, जानतैव मयेदं परिहसितम् । ततो युष्माभिः खलु राक्षसबुद्ध्या भीरुभिः पलायितुं प्रवृत्तम् ।

न्यस्य कक्षान्तरे मधुमङ्गलः तिरस्तिरयति तिरोधानं करोति ॥ हंहो इति । हे देवानां प्रिय । पशो इत्यर्थः ॥ अष्टाभिरिति । नवां नूतनाम् । शतधृतिर्ब्रह्मा । मरालस्य हंसस्य ॥ सोत्कण्ठमिति । मुरलीकलायाः परिमलान्विमर्दान् । सुरपतेरिन्द्रस्याक्षिसहस्रत इत्यर्थः ।

चित्रं वारिधरान्विनापि तरसा यैरद्य धारामयै-
दूरात्पश्यत देवमातृकमभूद्वृन्दाटवीमण्डलम् ॥ २० ॥

कृष्णः—(स्वगतम् ।) पुराणानाममीषां पुरस्ताद्विहारे संकुचन्ति मे चेतोवृत्तय. । तदग्रे यामि । (इति तरुणामन्तरमासाद्य प्रकाशम् ।) सखे मधुमङ्गल, पश्य माधवीया वनमाधुरीम् ।

क्वचिद्भृङ्गीगीतं क्वचिदनिलभङ्गीशिशिरता
क्वचिद्वल्लीलास्यं क्वचिदमलमल्लीपरिमलः ।
क्वचिद्धाराशाली कनकफलपालीरसभरो
हृषीकाणां वृन्दं प्रमदयति वृन्दावनमिदम् ॥ २१ ॥

मधुमङ्गलः—भो वअस्स, एदा पदुट्ठभङ्गभअंकरिए किं मे कोदूहलं तुज्झ वुन्दाडइए । अहं क्खु चउव्विहेहिं अण्णेहिं सविन्दिअहारिणीं गोउलेसरीए रसवइं जेव्व दट्ठूण रज्जेमि । (क)

कृष्णः—वयस्य, वन्दस्व वृन्दाटवीमेव । स्फुटमस्या' पुराणवल्लरीभिरपि तवाभीष्टं फलमुल्लासयितुं समर्थ्यते ।

मधुमङ्गलः—भो पिअवअस्स, तुमं सच्चवादित्ति सव्वलोएहिं भणिज्जसि । ता इमस्स तुज्झ वअणस्स मए परिच्छा कादव्वा । (इत्यञ्जलिं बध्वा ।) भो वल्लरीए, एसो हं वन्दामि । बुहुक्खिदो मे वअस्सो । ता देन्तु खण्डलड्डुआइं । (ख)

(क) भो वयस्य, एतत्प्रदुष्टभङ्गभयकर्या किं मे कौतूहलं तव वृन्दाटव्या । अहं खलु चतुर्विधैरन्नै. सर्वेन्द्रियहारिणीं गोकुलेश्वर्या रसवतीमेव दृष्ट्वा रज्यामि ।

(ख) भो प्रियवयस्य, त्वं सत्यवादीति सर्वलोकैर्भण्यसे । तदेतस्य तव वचनस्य मया परीक्षा कर्तव्या । भो वल्लर्य., एषोऽहं वन्दे । बुभुक्षितो मे वयस्य । तद्ददन्तु खण्डलड्डुकानि ।

'परिमलो विमर्देऽपि स्यान्मनोहारिगन्धवत् । रतौ विमर्दो विकसद्देहरागादिसौरभे ॥' इति विश्व । देवमातृक वृष्ट्यम्बुपालितम् । 'देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालित । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥' इत्यमर ॥ **सखे इति** । माधवीया माधवो वसन्त कृष्णश्च तत्सम्बन्धिनीम् । **क्वचिदिति** । भङ्गी मान्द्यम् । मन्दानिलस्य शैत्यमित्यर्थ । 'समौ कनकदाडिमौ' इत्यमर । हृषीकाणां श्रवणनासिकानेत्रत्वग्रसनानामिन्द्रियाणाम् ॥ **भो पिअ इति** । तथा च एतस्या. सकाशात् खण्डलड्डुकप्राप्ते सम्भावनापि

(प्रविश्य मोदकपात्रहस्ता पौर्णमासी।)

पौर्णमासी—चन्द्रानन, गृहाण रसज्ञामोदकानमून्मोदकान्।

रामः—(सस्मितम्।) वयस्य, दृष्टा जरद्वल्लवीवदान्यता।

पौर्णमासी—संकर्षण, जरद्वल्लवीवदान्यतेति भण्यताम्।

कृष्णः—आर्ये, केयं जरद्वल्लवी।

पौर्णमासी—चन्द्रमुख, मुखरा।

कृष्णः—तया किमकाण्डे खण्डलड्डुकानि समर्पितानि।

पौर्णमासी—नप्त्री तावदेतया अभिमन्योः पाणौ परिणायिता। तदुत्सवाभिरूपः समुदाचारोऽयमनुसस्रे।

कृष्णः—केयं नप्त्री।

पौर्णमासी—राधाभिधाना काचिदानन्दकौमुदी।

कृष्णः—(सरोमाञ्चम्। स्वगतम्।) श्रुतं नूनमम्बयोः संवादे शश्वदस्याः सौष्ठवम्। (इति कम्पमानो व्रीडां नाटयति।)

पौर्णमासी—(स्वगतम्।) कृष्णं विलक्षमवेक्ष्य नूनं रामः सव्याजमसौ सव्यतः प्रयाति।

कृष्णः—(पुनरात्मगतम्।) विक्रियां संगोपयितुं प्रसङ्गान्तरमङ्गीकुर्याम्। (प्रकाशम्।) आर्ये, अद्य मधुवासरे त्वयापि काचिन्महोत्सवलक्ष्मीरलंक्रियताम्। पश्य जरद्वल्लीश्रेणीरियं फुल्ला पल्लविता च।

पौर्णमासी—(सस्मितम्।) नागर, तवैव महोत्सवानामवसरोऽयं संवृत्तः। यदत्र पुष्पाणां पल्लवानां च तृष्णया वल्लवानां विलासिन्यः समेष्यन्ति।

---

नास्ति। अतः स्वनाम्ना तत्प्रार्थने सर्वे हसिष्यन्तीत्यभिप्रेत्य वयस्ये कृष्णे मुखरारोपः कृत इति भावः॥ चन्द्रानन इति। रसज्ञया जिह्वया रसज्ञा॥ नप्त्रीति। परिपूर्वो नीञ् विवाहार्थकस्ततो हेतुमण्णिचो विवाहोत्सवाभिरूपः। सम्यगुत्कृष्टाचारोऽयं मुखरया अनुसस्रे अनुसरणं चक्रे॥ व्रीडां नाटयतीति। पुलककम्पाभ्यामुत्पन्नां लज्जामभिनयति॥ विलक्षेति। विलक्षं विस्मयान्वितम्। 'विलक्षो विस्मयान्वितः' इत्यमरः॥ अद्येति। महोत्सवदायकलक्ष्मीः शोभा अलंक्रियतां भूषितीक्रियताम्।

**कृष्णः**—(सस्मित तिर्यगवेक्ष्य ।) आर्ये, ततः किम् ।

**पौर्णमासी**—(विहस्य ।) विलासिन्, स्ववासनानुसारादन्यथा मा शङ्किष्ठाः । परमेवमभिप्रायासि । ततस्तासां शून्येषु सद्मसु सखिभिस्ते सुखमपहर्तव्यानि गव्यानि ।

**कृष्णः**—धूर्ते, किं परिहस्यते । पश्य कोमलमञ्जरीमवचिन्वतीनां बल्लवीनां मण्डलेन खण्डितानि मे वृन्दाटवीशाखिविटपानि । तदेतास्ते निवारणीयाः ।

**पौर्णमासी**—मोहन, नव्यस्तबकोत्तंसिना भवतैव समुल्लासितोऽयं कुसुमेषुरागो बल्लवीनाम् । ताः कथमितो निवार्यताम् ।

**कृष्णः**—(स्मित्वा ।) अयि बलाकावलक्षकेशि, कथोपक्रमाद्वक्रमेव पन्थानमधिरूढासि । यदपराधिकास्वपि बल्लवीषु पक्षपातं न मुञ्चसि ।

**पौर्णमासी**—सुन्दर, संप्रति सराधिकाः खलु बल्लव्यः कथमपराधिकाः सन्तु । तेन ते प्रियस्य पुन्नागस्यापि सुमनस्तेयं हठेन करिष्यन्ति ।

**कृष्णः**—(स्वगतम् ।) हन्त, कथं मनोहारिणी सैव दैवात्पुनरावर्तते राधिकावार्ता ।

**मधुमङ्गलः**—(स्वगतम् ।) कहं राहित्ति णाममेत्तएण उम्मणाएदि एसो । (प्रकाशम् ।) भो वअस्स, मा क्खु इमाए उवरि णिब्भरं सितिण्णो होहि । (क)

(क) कथं राधेति नाममात्रेणोन्मनायत एष । भो वयस्य, मा खल्वेतस्या उपरि निर्भरं सतृष्णो भव ।

स्वत्स्वीकारेणैव शोभापि भूषिता भविष्यतीत्यर्थः ॥ **विलासिन्निति** । तासां बल्लवीनां शून्येषु गृहेषु ते तव मधुमङ्गलप्रभृतिसखिभिः सुखं गव्यानि प्रहर्तव्यानि ॥ **नव्येति** । नवपुष्पस्तबकोत्तंसमालक्ष्य तादृशमात्मनापि कर्तुं बल्लवीनां कुसुमेषु राग आग्रहो जात इति प्रकटोऽर्थः । वस्तुतस्तु कुसुमेषुः कन्दर्पस्तद्रागस्तदावेशः ॥ **अयीति** । बलाका बकपङ्क्तिः सा इव वलक्षा धवलाः केशा यस्या हे तथाविधे । जरया तव एतादृशं पालित्यं जातं तदपि कामकर्मठताकौटिल्यमिति भावः । अपराधिकासु अपराधकर्त्रीषु । पक्षपातं साहाय्यम् ॥ **सुन्दर इति** । सराधिका राधिकया सह वर्तमानाः । अपराधिका अपगता राधिका याभ्यस्तथाविधा कथं सन्तु । पुन्नागस्य वृक्षस्य, पक्षे पुरुषश्रेष्ठस्य

**कृष्णः**—(सप्रणयरोषम् ।) धिग्वाचाल, कुत्राहं सतृष्णः ।

**मधुमङ्गलः**—भो, मा कुप्पह । सरसाए मनोहरालीए उवरि चि भणामि । (क)

**कृष्णः**—सखे, भ्रान्तोऽसि । नेमानि मनोहराख्यानि किंतु मौक्तिकाख्यानि लड्डुकानि ।

**मधुमङ्गलः**—(विहस्य ।) पिअवअस्स, ण क्खु अहं भमिसीले राहाचक्के वट्टामि । कुदो भमिस्सम् । (ख)

**पौर्णमासी**—(स्वगतम् ।) सत्यं परिहस्यते बटुना, यदेष भावोद्वृत्तचेतोवृत्तितया वैलक्ष्यभागमिलक्ष्यते तदद्य पूर्णकामास्मि । (प्रकाशम् ।) सुन्दर, कृतमत्रोत्कण्ठया । सा विष्णुपदवीथीसचारिणी राधा नृलोके केन लभ्यताम् ।

**कृष्णः**—(सस्मितम् । विष्णुपदवीथीमवेक्ष्य राममनुसर्पन् ।) आर्य, व्यतीतेयं मध्याह्नमर्यादा । ततः कालिन्दीतीरेऽवतीर्य समापयन्तु भवन्तः पशूनामापानीयतृष्णाम् । स्वदयन्तु च स्वादूनि लड्डुकानि । मया तु सुहृत्तमाभ्यां श्रीदामसुबलाभ्यां सह मुहूर्तमग्रतो विश्रमितव्यम् ।

(रामः सखिभिः सह निष्क्रान्तः ।)

**पौर्णमासी**—(स्वगतम् ।) मयापि प्रतिच्छन्दस्य सिद्धिमवधारयितुं गन्तव्यम् । (इति कृष्णमभिनन्द्य परिक्रमति ।)

---

(क) भो, मा कुप्य । सरसाया मनोहरन्त्या उपरीति भणामि ।

(ख) प्रियवयस्य, न खल्वहं भ्रमिशीले राधाचक्रे वर्ते । कुतो भ्रमिष्यसि ।

---

तव । सुमनसां पुष्पाणाम्, शोभनमनसश्च ॥ **मनोहरालीति** । मनोहराख्यमोदकश्रेण्या उपरीति प्रकटोऽर्थः । मनोहरा आली सखी राधा तस्या उपरीति वास्तवः । **राहाचक्क इति** । राधानक्षत्रोपलक्षितचक्रे ज्योतिश्चक्रे इति प्रकटोऽर्थः । भ्रमिदायित्वाद्राधैव चक्रं तस्मिन्निति वास्तवः । तत्र त्वमेव वर्तमानो लक्ष्यसे इति भावः ॥ **सत्यमिति** । भावेन उद्वृत्ता उद्धता चेतोवृत्तिर्यस्य । तत्त्वेन राधाचक्रं ज्ञातुमहमुत्कण्ठ इति चेत् । कृतमत्रोत्कण्ठयेति अत्र राधाचक्रे विषये उत्कण्ठया कृतं अलमिति प्रकटोऽर्थः । अत्र राधायामुत्कण्ठया किं कार्यमिति वास्तवः । सा तव स्वत सिद्धेति भावः ॥ **विष्णुपदेति** । आकाशवर्त्मचारिणी राधा तन्नामनक्षत्रमिति प्रकटोऽर्थः । विष्णोस्तव एव पदसंचारिणी राधेति वास्तवार्थः । नृलोके केन लभ्यतामिति विवाहमात्रमभिमन्यो संभोगस्तु तवैवेत्यर्थः ॥ **मयेति** । प्रतिच्छन्दस्य चित्रपटस्य । नाटके सर्वत्र परिक्रमणं केवलं गमन-

**कृष्णः**—(पदान्तरे स्थित्वा ।) सखे श्रीदामन्, किं दृष्टपूर्वा ते जगदपूर्वा राधा ।

(श्रीदामा सलज्जस्मितं मुखमवाञ्चयति ।)

**सुबलः**—वअस्स, दिट्ठपुव्वित्ति किं एत्तिअं भणासि । णं इमस्स बहिणी क्खु एसा । (क)

**कृष्णः**—तदेहि । क्षणमत्र कदम्बसंबाधे रोधसि निविश्य राधानुधावनादुद्वेगि चेतो वंशीवादनविनोदेनान्यतः क्षिपामि ।

(इति निष्क्रान्ताः ।)

**पौर्णमासी**—(परिक्रम्य पुरः पश्यन्ती सानन्दम् ।) कथमित एव वयस्यया विहस्समाना विक्रीडति मे वत्सेयं राधिका । (इति लतान्तरे स्थित्वा ।)

बलादक्ष्णोर्लक्ष्मीः कवलयति नव्यं कुवलयं
मुखोल्लासः फुल्लं कमलवनमुल्लङ्घयति च ।
दशां कष्टामष्टापदमपि नयत्याङ्गिकरुचि-
र्विचित्रं राधायाः किमपि किल रूपं विलसति ॥ ३२ ॥

तदेतयोर्निर्मलनर्मगोष्ठीप्रतिबन्धं परिहरन्ती विरुन्निरुद्धेनाधुना विशाखां यामि ।

(इति निष्क्रान्ताः ।)

(ततः प्रविशति ललितयानुगम्यमाना राधिका ।

**राधिका**—हला ललिदे, किं करेदि अज्जिआ । (ख)

(क) वयस्य, दृष्टपूर्वेति किमेतावद्भणसि । नूनमेतस्य भगिनी खल्वेषा ।
(ख) हला ललिते, किं करोत्यार्या ।

मेव ॥ **पदेति** । पदान्तरे प्रदेशान्तरे । 'पद व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । ते तव दृष्टपूर्वा ॥ सुबलवाक्येन सलज्जः सन् बलदेवनिकटे किंचिन्मिषेण श्रीदामान प्रस्थाप्य सुबलं गृहीत्वान्यत्र गच्छन् श्रीकृष्ण आह—**तदेहीति** । कदम्बैः संबाधे सकीर्णे । रोधसि पुलिने ॥ **बलादिति** । अष्टापद स्वर्णम् । तत्तस्मादेतयोः राधाललितयोर्मद्दर्शने सति निर्मलपरिहासगोष्ठी न भविष्यति । अतस्तत्प्रतिबन्ध परिहरन्ती अहम् ॥ **हलेति** । हला हे सखि । 'हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति' इत्य-

**ललिता**—सहि, तुह सुरदेअस्स पूआकिदे एसा तमालतले वेदिअं णिम्मादि । (क)

**राधिका**—(पुरोऽवलोक्य ।) हला ललिदे, सङ्केमि सा व्वेअ एसा वुन्दाडई जाए माहुरी तुए पुणो पुणो मम वण्णीअदि । (ख)

**ललिता**—हला, सा ज्जेव्व एसा कण्हस्स लीलारुक्खवाडिआ । (ग)

**राधिका**—(सौत्सुक्यमात्मगतम् ।) अहो महुरत्तं दोणं अच्छराणम् । (प्रकाशम् ।) सहि, कस्सत्ति भणासि । (घ)

**ललिता**—(साकूतस्मितम् ।) हला, भणामि कण्हस्स त्ति । (ङ)

**राधिका**—(पुनः स्वगतम् ।) हन्त, जस्स णामावि रामाचित्तं इत्थं मोहेदि सो क्खु कीदिसो वा णामि त्ति । (इति सावहित्थ प्रकाशम् ।) हला, इमाइं णिउञ्जोवरि पुञ्जिदाइं गुञ्जाफलाइं चिइणिस्सम् । (च)

**ललिता**—(सपरिहासम् । संस्कृतेन ।)

देहं ते भुवनान्तरालविरलच्छायाविलासास्पदं
मा कौतूहलचञ्चलाक्षि लतिकाजाले प्रवेशं कृथाः ।
नव्यामञ्जनपुञ्जमञ्जुलरुचिः कुञ्जेचरी देवता
कान्तां कान्तिभिरङ्किताम् इह वने निःशङ्कमाकर्षति ॥ ३२ ॥

---

(क) सखि, तव सूर्यदेवस्य पूजाकृते एषा तमालतले वेदिकां निर्माति ।

(ख) हला ललिते, शङ्के सैवैषा वृन्दाटवी यस्या माधुरी त्वया पुनः पुनर्मम वर्ण्यते ।

(ग) हला, सैवैषा कृष्णस्य लीलावृक्षवाटिका ।

(घ) अहो मधुरत्वं द्वयोरक्षरयोः । सखि, कस्येति भणसि ।

(ङ) हला, भणामि कृष्णस्येति ।

(च) हन्त, यस्य नामापि रामाचित्तमित्थं मोहयति स खलु कीदृशो वा नामीति । हला, इमानि कुञ्जोपरि पुञ्जितानि निगुञ्जाफलानि विचेष्यामि ।

---

मरः ॥ आर्या श्वश्रूः ॥ सावहित्थमिति । साकारगोपनं यथा स्यात्तथा आह ॥ देहमिति । भुवनानामन्तराले मध्ये विरला अनुपलभ्यमाना याश्छायाः कान्तयस्तासां विलासास्पदं विहारगृहम् । कौतुकेन गुञ्जाचयनार्थं चञ्चले अक्षिणी यस्या हे तथाभूते ॥

राधिका—(किञ्चिद्रीतेव पराङ्मुखी सनर्मस्मितम् ।) सहि ललिदे, ताए देअदाए णूणं तुमं आअड्ढिदासि जे एदं जाणासि । (क)

ललिता—(विहस्य ।) हला, मं कीस एसा आअड्ढदु । ण क्खु अहं तुमं विअ कन्तीहिं अङ्किदा । (ख)

(नेपथ्ये वंशीध्वनिः ।)

राधिका—(निशम्य सचमत्कारं स्वगतम् ।) अम्महे, इमस्स मोहणत्तणं सद्दस्स । (इति वैवश्यं नाटयति ।) (ग)

ललिता—(विलोक्य स्वगतम् ।) हुं, एसा कोमलाङ्गी कुरङ्गी पढमं जाले निवडिदा । (घ)

राधिका—(प्रयत्नेन धैर्यमालम्ब्य । स्वगतम् ।) अवि णाम णं सद्दामिअपूरं उग्गिरन्तं जणं पेक्खिस्सम् । (ङ)

ललिता—(उपसृत्य ।) हला राहि, अत्थि मद्दुवरि तुह विसुद्धबुद्धी। (च)

राधिका—हला, कीस एव्वं भणासि। तुमं जेव्व तत्थ पमाणम्। (छ)

ललिता—कधेदु पिअसही किंति अकाण्डे विवसा असि तुमम्। (ज)

राधिका—(सलज्जम् । संस्कृतेन ।)

नादः कदम्बविटपान्तरतो विसर्प-
न्को नाम कर्णपदवीमविशन्न जाने ।

(क) सखि ललिते, तया देवतया नूनं त्वमाकृष्टासि यदिदं जानासि ।
(ख) हला, मां कस्मादेषाकर्षतु । न खल्वहं त्वामिव कान्तिभिरङ्किता ।
(ग) आश्चर्यम्, अस्य मोहनत्वं शब्दस्य ।
(घ) हुं, एषा कोमलाङ्गी कुरङ्गी प्रथमं जाले निपतिता ।
(ङ) अपि नाम एनं शब्दामृतपूरमुद्गिरन्तं जनं प्रेक्षिष्ये ।
(च) हला राधे, अस्ति मदुपरि तव विशुद्धबुद्धिः ।
(छ) हला, कस्मादेवं भणसि । त्वमेव तत्र प्रमाणम् ।
(ज) कथयतु प्रियसखी किमित्यकाण्डे विवशासि त्वम् ।

किंचिदिति । पराङ्मुखी मुखावयवाभिमुखा भूत्वा ॥ अपीति । अपि सम्भावनायाम् । नाम प्राकाश्ये । कदापि भाग्यवशात्तं जनं द्रक्ष्यामीत्यर्थः ॥ विशुद्धेति । विश्वस्ता बुद्धिरित्यर्थः । प्रश्नोऽयं अस्ति वा नास्ति वेति सत्यं कथ्यतामित्यर्थः । नाद इति ।

हा हा कुलीनगृहिणीगणगर्हणीयां
येनाद्य कामपि दशां सखि लम्भितासि ॥ ३४ ॥

ललिता—हला, एसो मुरलीरओ । (क)

राधिका—(सव्यथम् । संस्कृतेन ।)

अजडः कम्पसंपादी शस्त्रादन्यो निकृन्तनः ।
तापनोऽनुष्णताधारः कोऽयं वा मुरलीरवः ॥ ३५ ॥

(इत्युद्वेगं नाटयन्ती ।) हला, णाहं मुरलीणाअस्स अणहिण्णा । ता अलं विप्पलम्भेण । फुडं एसो केण वि महाणाअरेण कोवि मोहणमन्तो पढीअदि । (ख)

(प्रविश्य चित्रपटहस्ता विशाखा ।)

विशाखा—(राधामवधारयन्ती स्वगतम् ।) दाणि अण्णादिसी एसा लक्खीअदि । ता णूणं कण्हस्स वंसिआए डंसिदा । होदु । पुच्छिस्सम् । (ग)

(इत्युपसृत्य प्रकाशम् । संस्कृतेन ।)

क्षोणीं पङ्किलयन्ति पङ्कजरुचोरक्ष्णोः पयोबिन्दवः
श्वासास्ताण्डवयन्ति पाण्डुवदने दूरादुरोजांशुकम् ।
मूर्तिं दन्तुरयन्ति संततममी रोमाञ्चपुञ्जाश्च ते
मन्ये माधवमाधुरी श्रवणयोरभ्यासमभ्याययौ ॥ ३६ ॥

---

(क) हला, एष मुरलीरवः ।

(ख) हला, नाहं मुरलीनादस्यानभिज्ञा । तदलं विप्रलम्भेन । स्फुटमेष केनापि महानागरेण कोऽपि मोहनमन्त्रः पठ्यते ।

(ग) इदानीमन्यादृशी एषा लक्ष्यते । तन्नूनं कृष्णस्य वंशिकया दष्टा । भवतु । प्रक्ष्यामि ।

---

कदम्बविटपमध्याद्विसर्पन् विशेषेण चलन् कोऽपि नादोऽविशत् । तं नादं अहं न जाने येन नादेन प्रयोजककर्त्रा ॥ **अजड इति** । अजडो हिमभिन्नः । निकृन्तनश्छेदकः । 'कृती छेदने' इत्यपि धातुरस्ति । न उष्णतां धारयतीत्यनुष्णताधारः ॥ **हलेति** । विप्रलम्भेन प्रतारणावाक्येन ॥ **प्रक्ष्यामीति** । प्रश्नं करिष्यामि ॥ **क्षोणीमिति** । पङ्किलयन्ति पङ्किलीकुर्वन्ति । ताण्डवयन्ति ताण्डवयुक्तं कुर्वन्ति । 'मत्वन्ताण्णिचो विन्मतोर्लुक्' इति मतुपो

**राधिका**—(अनाकर्णितकेनैव सोत्कम्पम् ।) ललिदे, पुणो एसो सो ज्जेव्व कोवि सद्दो विक्कमदि । (क)

**ललिता**—(संस्कृतेन ।)

एष स्थैर्यभुजङ्गसङ्घदमनासङ्गे विहङ्गेश्वरो
क्रीडाव्याधिधुराविधूननविधौ तन्वङ्गि धन्वन्तरिः ।
साध्वीगर्वभराम्बुराशिचुलुकारम्भे तु कुम्भोद्भवः
कालिन्दीतटमण्डलीषु मुरलीतुण्डाद्ध्वनिर्धावति ॥ ३७ ॥

**राधिका**—सहि, जादा मह हिअए कावि गुरुई वेअणा । ता गदुअ सुविस्सम् । (ख)

**विशाखा**—हला राहे, तुह वेअणाविद्धंसणं किंवि एदं ओसहं मह हत्थे वट्टदि । ता सेवेहि णम् । (ग)

**राधिका**—विशाखे, एहि । अङ्गणोवकण्ठे फुल्लकण्णिआरमण्डलीच्छाअं अज्झासिअ पेक्खम्ह । (घ)

(इति निष्क्रान्ताः सर्वे ।)

इति वेणुनादविलासो नाम प्रथमोऽङ्कः ।

---

(क) ललिते, पुनरेष स एव कोऽपि शब्दो विक्रमते ।

(ख) सखि, जाता मम हृदये कापि गुर्वी वेदना । तद्गत्वा स्वप्स्यामि ।

(ग) सखि राधे, तव वेदनाविध्वंसनं किमप्येतदौषधं मम हस्ते वर्तते । तत्सेवस्वैतत् ।

(घ) विशाखे, एहि । अङ्गणोपकण्ठे फुल्लकर्णिकारमण्डलीच्छायामध्यास्य प्रेक्ष्यामहे ।

---

इक् । दन्तुरयन्ति कण्टकितां कुर्वन्ति । अभ्याशे निकटम् ॥ **अनाकर्णितेति** । अनाकर्णितकेन । नाट्योक्तावश्रुतेनेत्यर्थः । तथा च विशाखावाक्यं श्रुतमश्रुतं कृतमिति सोत्कम्पं यथा स्यात्तथा आह—**पुनरिति** ॥ **एष स्थैर्येत्यादि** । स्थैर्यरूपसर्पसमूहस्य दमनासक्तौ विहङ्गेश्वरो गरुडः ॥ **विशाखे इत्यादि** । शयनगृहस्याङ्गननिकटे ॥ इति प्रथमोऽङ्कः ॥

द्वितीयोऽङ्कः ।

(ततः प्रविशति नान्दीमुखी ।)

**नान्दीमुखी**—आदिट्ठम्हि तत्तहोदीए पौर्णमासीए, जधा—अइ णन्दीमुहि, सुदं मए णिब्भरा सुत्थसरीरा मे वच्छा राही। ता गदुअ जाणीहि से तत्तं त्ति । तदो मुहराघरं गमिस्सम्। (इति परिक्रम्य पुरः पश्यन्ती ।) कहं इध जेव्व कन्दन्ती मुहरा आअच्छइ । (क)

(प्रविश्य ।)

**मुखरा**—हद्धी हद्धी । हदम्हि मन्दभाइणी । (ख)

**नान्दीमुखी**—अज्जे मुहरे, कीस रोअसि । (ग)

**मुखरा**—(विलोक्य ।) वच्छे, राहीसंदावेण । (घ)

**नान्दीमुखी**—केरिसं चेट्ठई राही । (ङ)

**मुखरा**—वच्छे, वाउला भविअ किंवि पलवइ । (च) (इति संस्कृतेन ।)

क्रूराणामलिनां कुलैर्मलिनया कृत्यं न मे मालया
बालाहं किमु नर्मणस्तव पदं दूरीभव प्राङ्गणात् ।
इत्यादीनि दुरक्षराणि परितः स्वप्ने तथा जागरे
जल्पन्ती जलजेक्षणा क्षपयति क्लेशेन रात्रिंदिवम् ॥ १ ॥

---

(क) आदिष्टास्मि तत्रभवत्या पौर्णमास्या, यथा—अयि नान्दीमुखि, श्रुतं मया निर्भरा सुस्थशरीरा मे वत्सा राधा । तद्गत्वा जानीह्यस्यास्तत्त्वमिति । ततो मुखरागृहं गमिष्यामि ।' कथमित एव क्रन्दन्ती मुखरा आगच्छति ।

(ख) हा धिक् हा धिक् । हतास्मि मन्दभागिनी ।

(ग) आर्ये मुखरे, कस्माद्रोदिषि ।

(घ) वत्से, राधासंतापेन ।

(ङ) कीदृशं चेष्टते राधा ।

(च) वत्से, वातुला भूत्वा किमपि प्रलपति ।

---

तदिदानीं चित्रपटं दृष्ट्वा अत्युन्मत्ताया राधाया' प्रलापादिषु पौर्णमासीमुखराद्याः साक्षात्परम्परया श्रुत्वोद्विग्ना बभूवुः । एतन्मध्ये पौर्णमासी कथं राधिकास्वस्थशरीरा जातेति विशेषेण ज्ञातुं नान्दीमुखीं तन्निकटे प्रस्थापयति—**तत इति**। तत्रभवत्या पूज्यया। परिक्रम्य गत्वा॥ **दुरक्षराणीति** । तथा च यदि कुलाङ्गनाया राधाया मुख-

नान्दीमुखी—(स्वगतम् ।) उवसग्गकिदा ण क्खु एरिसी पलावमुद्दा । ता दिट्ठिआ विक्कमिदं एत्थ कण्हविलासेण । (क)

मुखरा—वच्छे, अहं गदुअ भअवदीं विणविण्णम् । तुमं वेदसीकुञ्जं उवसप्पिअ राहिअं पेच्छ । (ख)

(इति निष्क्रान्ते ।)

(ततः प्रविशति सखीभ्यामुपास्यमाना राधा ।)

राधा—(सोद्वेगं स्वगतम् ।) हदहिअअ, जस्स पडिच्छन्ददंसणमेत्तादो इरिसी दुरूहसंगमा उवत्थिदा दे अवत्था तत्थ वि पुणो राअं वहसि।(ग)

उभे—हला राहिए, आमयेहिन्तो विलक्खणो दे वेअणाणुबन्धो लक्खीअदि । ता कीस अम्हेसु तत्तं ण कधेसि । (घ)

(राधिका निःश्वस्य वक्त्रं व्यावर्तयति ।)

विशाखा—(पुरोऽभिगम्य । संस्कृतेन ।)

चिन्तासंततिरद्य कृन्तति सखि स्वान्तस्य किं ते धृतिं
किं वा सिञ्चति ताम्रमम्बरमतिस्वेदाम्भसा डम्बरम् ।
कम्पश्चम्पकगौरि लुम्पति वपुःस्थैर्यं कथं वा बला-
त्तथ्यं ब्रूहि न मङ्गला परिजने संगोपनाङ्गीकृतिः ॥ २ ॥

---

(क) उपसर्गकृता न खल्वीदृशी प्रलापमुद्रा । तद्दिष्ट्या विक्रान्तमत्र कृष्णविलासेन ।

(ख) वत्से, अहं गत्वा भगवतीं विज्ञापयिष्यामि । त्वं वेतसीकुञ्जमुपसृत्य राधिकां पश्य ।

(ग) हतहृदय, यस्य प्रतिच्छन्ददर्शनमात्रत ईदृशी दुरूहसंगमा उपस्थिता तेऽवस्था तत्रापि पुना रागं वहसि ।

(घ) हला राधे, आमयेभ्यो विलक्षणस्ते वेदनानुबन्धो लक्ष्यते । तत्कस्मादस्मासु तत्त्वं न कथयसि ।

---

देतादृशाक्षराणि दैवादन्ये जना श्रोष्यन्ति तदा पुरुषान्तरसंगममेव कल्पयिष्यन्तीति भावः ॥ **उवसग्गेति** । उपसर्गोऽत्र ग्रहवैगुण्यम् ॥ **तत इति** । सखीभ्यां ललिताविशाखाभ्याम् ॥ **दुरूहसंगमेति** । तथा च तवैतादृशावस्थया सह संगमः कुत्राप्यद्रष्टादुरूहणीय इत्यर्थः ॥ **उभे इति** । उभे सख्यौ आहतुः ॥ **चिन्तेति** । डम्बरं

राधिका—(सासूयम् ।) अइ णिट्ठुरे विसाहे, तुमं एव्वं पुच्छन्ती वि ण ळज्जसि । (क)

विशाखा—(सशङ्कम् ।) हला, कहिं पि अवरद्धम्हि त्ति ण सुमरामि।(ख)

राधिका—अइ णिक्किवे, कीस एव्वं भणासि। सुमरिअ पेक्ख । (ग)

विशाखा—हला, गरुएण वि पणिहाणेण ण मे सुमरणं होदि । (घ)

राधिका—उम्मत्ते, गहणे इमस्सिं अच्चाहिदाणलकुण्डे तुमं जेव्व मह पक्खेवणी । (ङ)

विशाखा—कधं विअ । (च)

राधिका—(सेर्ष्यम् ।) अइ मिच्छासरळे, आलेक्खगदभुअङ्गसङ्गिणि, चिट्ठ चिट्ठ । (छ) (इति सर्वैवस्य संस्कृतेन ।)

वितन्वानस्तन्वा मरकतरुचीना रुचिरता
पटान्निष्कान्तोऽभूद्धृतशिखिशिखण्डो नवयुवा ।

(इत्यर्धोक्तौ वाक्स्तम्भं नाटयति ।)

(सख्यौ सभ्रूभङ्गमन्योन्य पश्यतः ।)

राधिका—

भ्रुवं तेन क्षिप्त्वा किमपि हसतोन्मादितमतेः
शशी वृत्तो वह्निः परमहह वह्निर्मम शशी ॥ २ ॥

(क) अयि निष्ठुरे विशाखे, त्वमेव पृच्छन्त्यपि न लज्जसे ।
(ख) हला, कर्हिचिदप्यपराद्धास्मीति न स्मरामि ।
(ग) अयि निष्कृपे, कस्मादेवं भणसि । स्मृत्वा पश्य ।
(घ) हला, गुरुणापि प्रणिधानेन न मे स्मरणं भवति ।
(ङ) उन्मत्ते, गहने एतस्मिन्नत्याहितानलकुण्डे त्वमेव मम प्रक्षेपणी ।
(च) कथमिव ।
(छ) अयि मिथ्यासरले, आलेख्यगतभुजङ्गसङ्गिनि, तिष्ठ तिष्ठ ।

समूह । ताम्र रक्तवर्णं किं कथ सिद्यसि तस्मादेतेषां कारण वद इति भाव ॥ उन्मत्ते इति । गहने गभीरे । अत्याहिते विपद्भ्देऽनलकुण्डे ॥ हलेति । येन प्रकारेणाह प्रक्षेपणीत्यर्थ. ॥ अयीति । भुजङ्ग कामुक ॥ भ्रुवमित्यादि । किमप्यनिर्वचनीय यथा स्यात्तथा हसता तेन यूना वशी उन्मादिता मतिर्यस्यास्तथाभूताया मम शशी वह्नि-

**ललिता**—हला, किं एसो सिविण्णस्स विलासो । (क)

**राधिका**—(संस्कृतेन ।)

किं स्वप्नस्य विलक्षणा गतिरियं किं जागरस्याथवा
किं रात्रेरुपसत्तिरेव रभसादह्नः किमह्नाय वा ।
इत्थं श्यामलचन्द्रिकापरिचयस्पन्देन संदीपितै-
रन्तःक्षोभकुलैरहं परिवृता प्रज्ञातुमज्ञाभवम् ॥ ४ ॥

**विशाखा**—(साकूतम् ।) हला राहे, णूणं एसो दे चित्तविब्भमो जेव्व क्खणिओ । (ख)

**राधिका**—(साभ्यसूयम् ।) अइ अवीसद्धे, विरमेहि । कीस अप्पणो दोसं झम्पिदुं पउत्तासि । (ग) (इति संस्कृतेन ।)

कृता भक्तिच्छेदैर्घुसृणघनचर्चामधिवह-
न्पुनर्लब्धो लुब्धः प्रियकतरुमूले चटुलधीः ।
लपन्त्याः साक्षेपं नहि नहि नहीति स्मितमुखो
हठान्मे दुर्लीलः स किल भुजवल्लीदलमधात् ॥ ५ ॥

ततश्च ।

दरोन्मीलन्नीलोत्पलदलरुचस्तस्य निबिडा-
द्विरूढाना सद्यः करसरसिजस्पर्शकुतुकात् ।

---

(क) हला, किमेष स्वप्नस्य विलासः ।

(ख) हला राधे, नूनमेष ते चित्तविभ्रम एव क्षणिकः ।

(ग) अयि अविश्वस्ते, विरम । कस्मादात्मनो दोषमाच्छादयितुं प्रवृत्तासि ।

---

दीप्त । तदुद्दीपकत्वेन तापकत्वात् । अहह खेदे । वह्निर्मम शशी । तथा तदपेक्षया मद्धृदयस्थव ह्नेरतिशयाधिक्येन स तु मन्निकटे शशीवाभाति । अथवाह्लादकत्वाद्वह्निरेव मम शशी । वह्नौ प्रवेशः कर्तव्य इति भावः ॥ **किमिति** । किमियं स्वप्नस्य विलक्षणा गतिः । अतो हेतो रभसाद्वेगात् किं रात्रेरुपसत्तिरियम् । किं शीघ्रमेव रात्रिरुपसत्तेत्यर्थः । किं वा जागरस्य विलक्षणा गतिः । अतो हेतोः किं चाह्नाय शीघ्रमह्न उपसत्तिरियम् । किं शीघ्रमेव दिनमुपपन्नमित्यर्थः । इत्थमनेन प्रकारेण स्वप्नजागरौ रात्रिदिवसौ च प्रकर्षेण ज्ञातुमज्ञाभवम् । यतोऽहं श्यामलेत्यादि ॥ **कृतामित्यादि** । भक्त्या अङ्गुल्यादिवैचित्रीभिर्विभागेन ये छेदास्तैः कृता कुङ्कुमचर्चां बाह्वादौ वहन् । प्रियकः कदम्बः ॥ **दरोन्मीलदिति** । तस्य करसरसिज

वहन्ती क्षोभाणां निवहमिह नाज्ञासिषमिदं
क वाहं का वाहं चकर किमहं वा सखि तदा ॥ ६ ॥

(इति वैवश्यं नाटयन्ती स्वगतम्।) अइ दुट्ठहिअअ मक्कड, कण्हो वैणविओ सामलकिसोरो त्ति तिणेसु पुरिसेसु राअं वहन्तो वि तुमं ण लज्जसि। ता दाणिं अप्पाणं वावादिअ पामरं तुमं हदासं करिस्सम्। (क)

**ललिता**—हन्त, हतमम्महसचिवस्स वसन्तस्स विप्फुजिदेण दूसिदा एदे परिसरा दीसन्ति। ता किं एत्थ सरणम्। (ख)

**राधिका**—(संस्कृतेन।)

विक्रीडन्तु पटीरपर्वततटीसंसर्गिणो मारुताः
खेलन्तः कलयन्तु कोमलतरां पुंस्कोकिलाः काकलीम्।
संरम्भेण शिलीमुखा ध्वनिभृतो विध्यन्तु मन्मानसं
हास्यन्त्याः सखि मे व्यथां परममी कुर्वन्ति साहायकम् ॥ ७ ॥

**उभे**—(सास्रम्।) हला, इदाहिं घोरचिन्ताहिं कीस किलिम्मसि। अम्हेहिं तक्किदं अदिमेत्तदुलहो ण क्खु दे हिअअट्ठिदो अत्थो। (ग)

---

(क) अयि दुष्टहृदय मर्कट, कृष्णो वैणविकः श्यामलकिशोर इति त्रिषु पुरुषेषु रागं वहदपि त्वं न लज्जसे। तदिदानीमात्मानं व्यापाद्य पामरं त्वां हताशं करिष्ये।

(ख) हन्त, हतमन्मथसचिवस्य वसन्तस्य विस्फूर्जितेन दूषिता एते परिसरा दृश्यन्ते। तत्किमत्र शरणम्।

(ग) हला, एताभिर्घोरचिन्ताभिः कस्मात्क्लाम्यसि। अस्माभिस्तर्कितमतिमात्रदुर्लभो न खलु ते हृदयस्थितोऽर्थः।

---

सर्वकुतुकाद्धेतोः विस्टाना उत्पन्नाना क्षोभाणा निवह वहन्ती अह इद न अज्ञासिपम्। तस्य कीदृशस्य। दर ईपदुन्मीलता नीलोत्पलाना दलेषु रुच इव रुचः कान्तयो यस्य। सर्वकुतुकात्कीदृशात्। निविडात्। व्यापाद्य नाशयित्वा॥ **हन्तेति**। विस्फूर्जितेन विक्रमेण। परिसराः प्रदेशाः। 'शरण गृहरक्षित्रो.' इत्यमरः। तथा च कोऽत्र रक्षिता भविष्यतीत्यर्थ.॥ **विक्रीडन्त्विति**। पटीरपर्वतो मलयाचल.। सरम्भेण ओघेन। ध्वनिभृतः शिलीमुखाः भ्रमराः। व्यथा हास्यन्त्याः त्यक्ष्यन्त्याः साहायकं साहाय्यम्। तथा च मलयानिलादिरूपैर्दीपनैः करणैः शीघ्रमेव प्राणेषु विनष्टेषु मम चिराय दुःखं न भविष्यतीति

राधिका—(निःश्वस्य सस्तंभम् ।)

इयं सखि सुदुःसाध्या राधाहृदयवेदना ।
कृता यत्र चिकित्सापि कुत्सायां पर्यवस्यति ॥ ८ ॥

ता विण्णवेमि इमस्सिं ओसरे जधा सुदिढं एक्कं लदापासं लहेमि तधा सिणेहस्स णिक्किदिं करेध । (क)

उभे—(सव्यथम् ।) हला, एव्वं दारुणं भणन्ती मा क्खु सहीणं जीविदं लुम्पेहि । णं पच्चासण्णा दे अहीट्ठसिद्धी । (ख)

राधिका—सहिओ, ण जाणीध इमाए हदराहीए हिअअदुद्धत्तणम्, जं एव्वं मन्तेध । (ग)

उभे—कधिदं जेव्व सव्वं पिअसहीए । (घ)

राधिका—णहु णहु गुरुई लज्जा णिवारेदि । (ङ)

सख्यौ—हला, अप्पसआसादो वि गुरुओ अम्हेसु तुह सिणेहो लक्खीअदि । ता बहिरङ्गाए लज्जाए को एत्थ अणुरोहो । (च)

---

(क) तर्हि विज्ञापयाम्येतस्मिन्नवसरे यथा(दा) सुदृढमेकं लतापाशं लभे तदा स्नेहस्य निष्कृतिं कुरुथ ।

(ख) हला, एवं दारुणं भणन्ती मा खलु सखीनां जीवितं लुम्प । नूनं प्रत्यासन्ना तेऽभीष्टसिद्धिः ।

(ग) सख्यौ, न जानीथ एतस्या हतराधाया हृदयदुष्टत्वम्, यदेवं मन्त्रयथ ।

(घ) कथितमेव सर्वं प्रियसख्या ।

(ङ) नहि नहि गुर्वी लज्जा निवारयति ।

(च) हला, आत्मसकाशतोऽपि गुरुरावयोस्तव स्नेहो लक्ष्यते । तद्बहिरङ्गाया लज्जायाः कोऽत्रानुरोधः ।

---

भावः ॥ इयमिति । कुत्सायामिति वेदनाया अनिवृत्तौ चिकित्सकस्यैव निन्दा स्यादित्यर्थः । तथा च पुरप्रवेशे एकक्षण एव वासनावस्था मम एकपुरप्रापणेऽपि वेदना न यास्यति । गूढाभिप्रायः पश्चाद्व्यक्तीभविष्यतीति भावः ॥ तर्हीति । तेन पाशेन कण्ठं निबध्य प्राणास्त्यक्तव्या इति भावः ॥ सख्य इति । दुष्टत्वं पश्चाद्व्यक्तीभविष्यति ॥

**राधिका**—(सस्कृतेन।)

एकस्य श्रुतदेव लुम्पति मतिं कृष्णेति नामाक्षरं
सान्द्रोन्मादपरंपरामुपनयत्यन्यस्य वंशीकलः।
एष स्निग्धघनद्युतिर्मनसि मे लग्नः सकृद्वीक्षणा-
त्कष्टं धिक्पुरुषत्रये रतिरभून्मन्ये मृतिः श्रेयसी ॥ ९ ॥

**उभे**—(सहर्षम्।) हला, कधं तुम्हादिसीणं गोउलसुन्दरीणं गोउलिन्दणन्दणं उज्झिअ परस्सिं अणुराओ संभवदि। ता सुणाहि एक्को जेव एसो महाणाअरो कण्हो। (क)

**राधिका**—(सोच्छ्वासमात्मगतम्।) हिअअ, समास्सस समास्सस। दाणिं जादा तुह जीअलोअणिवासलालसा। (ख)

**उभे**—(सस्कृतेन।)

सा सौरभोर्मिपरिदिग्धदिगन्तरापि
वन्ध्यं जनुः सुतनु गन्धफली बिभर्ति।
राधे न विभ्रमभरः क्रियते यदङ्के
कामं निपीतमधुना मधुसूदनेन ॥ १० ॥

**नान्दीमुखी**—(परिक्रम्य।) कहं अग्गदो जेव एसा राही। (इत्युपसृत्य।) जअदु जअदु पिअसही। (ग)

**राधिका**—(सावहित्थम्।) सहि, कुसलं भअवदीए। (घ)

**नान्दीमुखी**—तुह उल्लाहत्तणे जादे। (इति राधा निभाल्य स्वगतम्।) अप्पेक्खिअ ज्जेअ मए पढमं णिट्ठङ्किदम्। तधावि पुच्छिस्सम्। (ङ) (प्रकाशम्।

(क) हला, कथं युष्मादृशीनां गोकुलसुन्दरीणां गोकुलेन्द्रनन्दनं त्यक्त्वा अपरस्मिन्ननुरागः संभवति। तच्छृणु एक एवैष महानागरः कृष्णः।

(ख) हृदय, समाश्वसिहि समाश्वसिहि। इदानीं जाता तव जीवलोकनिवासलालसा।

(ग) कथमग्रत एवैषा राधा। जयतु जयतु प्रियसखी।

(घ) सखि, कुशलं भगवत्याः।

(ङ) तव उल्लाघत्वे जाते। अप्रेक्ष्यैव मया प्रथमं निष्टङ्कितम्। तथापि प्रक्ष्यामि।

प्रियसख्या राधया ॥ सेति। गन्धफली चम्पकः। मधुसूदनो भ्रमरः कृष्णश्च। व्यपदेशेन तव सौन्दर्यादीनां कृष्णसंभोगं विना वैफल्यमित्युक्तं भवति ॥ तवेति। उल्लाघो निर्व्याधिः। 'उल्लाघो निर्गतो गदात्' इत्यमरः। निष्टङ्कितम्। निर्धारितमित्यर्थः। प्रक्ष्यामि प्रश्नं करिष्यामि ॥

संस्कृतेन ।)

न मुग्धे वैदग्धीगरिमपरिदिग्धा तव मति-
विरामो नेदानीमपि वपुषि बाल्यस्य वयसः ।
कमप्यन्तःक्षोभं प्रथयसि तथापि त्वमथवा
सखि ज्ञातं वृन्दावनमदनविस्फूर्जितमिदम् ॥ ११ ॥

**ललिता**—अइ अलिआसङ्किणि, सीदलदक्खिणाणिलहेतुअं कम्पपुलअं पेक्खिअ कीस दूसहं परिवादं देसि । (क)

**नान्दीमुखी**—(सस्मितम् । संस्कृतेन ।)

रोमाञ्चः परिचेष्यते कथमयं नास्माभिरुत्कम्पवा-
न्दुष्कीर्तिं नहि दक्षिणाय मरुते दाक्षिण्यशून्ये वद ।
एतन्मन्मथकोटिसंभ्रमभरैर्बम्भ्रम्यते सुभ्रुवः
स्वान्ते नागरचक्रवर्तिनयनप्रान्तस्य लीलायितम् ॥ १२ ॥

ता सच्चं कहेहि । कदा एदाए पच्चक्खीकिदो गोउलाणन्दो । (ख)

**विशाखा**—एवं णेदम् । (ग)

**नान्दीमुखी**—(संस्कृतेन ।)

दरविचलितबाल्या वल्लभा बान्धवानां
विहरसि भुवने त्वं पत्युरामोदपात्री ।

---

(क) अयि अलीकाशङ्किनि, शीतलदक्षिणानिलहेतुकं कम्पपुलकं प्रेक्ष्य कस्माद्दुस्सहं परिवादं ददासि ।

(ख) तत्सत्यं कथय । कदा एतया प्रत्यक्षीकृतो गोकुलानन्दः ।

(ग) एवमेतत् ।

---

**नेति** । परिदिग्धा परिचिता तव मतिः यतः ॥ **विराम इत्यादि** । प्रथयसि प्रकटयसि । वृन्दावनमदनो मदनगोपाल एव तस्य विस्फूर्जितं पराक्रमः ॥ **रोमाञ्च इति** । उत्कम्पवान् रोमाञ्चः कथं कम्पजातिभिरस्माभिर्न परिचेष्यते । हे दाक्षिण्यशून्ये, दक्षिणाय दक्षिणदेशोद्भवाय । पक्षे अनुकूलाय । मन्मथकोटितः ये संभ्रमभराश्चिन्तावेगातिशयास्तैर्हेतुभिः । लीलायितं लीला बम्भ्रम्यते ॥ **एवमिति** । नाट्योक्तावेवमेतच्छब्देन कृष्णनामश्रवणमुरलीश्रवणचित्रपटदर्शनादिरूपपूर्ववृत्तान्तं सर्वं विशाखया कथितमिति ज्ञाप्यते ॥ **दरेति** ।

अहह पशुपरामाकामिनो मोहनत्वं
त्वमपि यदमुनान्तर्गाढमुन्मादितासि ॥ १३ ॥

ता अहं भअवदीं तुवरेदुं गमिस्सम्। (इति निष्क्रान्ता।) (क)

**राधिका**—(विमृश्य। सस्कृतेन।)

सा कल्याणी कुलयुवतिभिः शीलिता धर्मशैली
द्रागस्माभिः कथमविनयोत्फुल्लमुल्लङ्घनीया।

(इत्यर्धोक्ते। पुन सोत्कण्ठम्।)

हा दृग्भङ्गीपरिमलकलाकर्मठोऽयं कथं वा
हातुं शक्यः पशुपनगरीनागरीनागरेन्द्रः ॥ १४ ॥

(तत प्रविशति नान्दीमुखीमुखराभ्यामनुगम्यमाना पौर्णमासी।)

**पौर्णमासी**—मुखरे, किमदु.साधबाधा तर्किता त्वया राधा।

**मुखरा**—भअवदि, सुणाहि। (ख) (सस्कृतेन।)

अग्रे वीक्ष्य शिखण्डखण्डमचिरादुत्कम्पमालम्बते
गुञ्जाना च विलोकनान्मुहुरसौ सास्रं परिक्रोशति।
नो जाने जनयन्नपूर्वनटनक्रीडाचमत्कारिता
बालायाः किल चित्तभूमिमविशत्कोऽयं नवीनो ग्रहः ॥ १५ ॥

**पौर्णमासी**—(स्वगतम्।) सोऽयमुद्दण्डस्य नवानुरागराशेः कोऽपि चण्डिमा। (प्रकाशम्।) मुखरे, साधु विज्ञातम्, यदत्र दानवकुलावतंसाः कंसादयो राधामन्विप्यन्ति तेन कोऽप्ययमङ्गनाग्रहो बालामाविवेश।

---

(क) तदहं भगवतीं त्वरयितु गमिष्यामि।

(ख) भगवति, शृणु।

---

दर ईपद्विचलित वाल्य यस्या। पत्नु प्रानिपानी। मोहनल मोहकत्वम्। येन अमुना मोहन त्वेन ॥ सेति। सा कल्याणाति पुर्भाभृ।जगन्मान्नतीत्वेऽप्यस्यास्ततोऽप्यधिकपुञ्जीभूतविशिष्टप्रेमभरस्य प्राबल्यात्स्वादास्य शैथिल्यमित्यर्थं। धमशैली धर्मानुशीलनम्। अविनयेनो त्फुल्ल यथा स्यात्तथा कथ उल्लङ्घनीया। परिमल प्रकारास्तत्र या कला वैदग्धी तत्र कर्मठोऽयम्। न दु साधा बाधा यस्यास्तथाभूता कथित्तर्किता इत्यर्थं ॥ कोऽप्ययमिति। पक्षे

**मुखरा**—भअवदि, को एत्थ पडिआरो । (क)

**पौर्णमासी**—अपि दानवारेर्दृष्टिरेव ।

**मुखरा**—भअवदि, कुडिला क्खु जडिला एदं णाहिणन्दिस्सदि । (ख)

**पौर्णमासी**—मुखरे, सा खलु मद्गिरा संदिश्यताम्—'जटिले, मा शङ्किष्ठाः । कृष्णमात्मविधयैव संघटयिष्यामि' इति ।

(मुखरा नमस्कृत्य निष्क्रान्ता ।)

**पौर्णमासी**—(उपसृत्य ।) वत्से, निजाभीष्टलाभेन कृतार्थीभूयाः ।

(राधा सावहित्थं प्रणमति ।)

**पौर्णमासी**—(स्वगतम् ।)

भजन्त्याः सव्रीडं कथमपि तदाडम्बरघटा-
मपह्नोतुं यत्नानभिनवमदामोदमधुरा ।
अधीरा कालिन्दीपुलिनकलभेन्द्रस्य विजयं
सरोजाक्ष्याः साक्षाद्वदति हृदि कुञ्जे तनुवनी ॥ १६ ॥

(पुनर्निरूप्य जनान्तिकम् ।) हन्त नान्दीमुखि, निर्भरगभीरप्रेमोर्मिनिर्मितमनःक्षोभा किमप्येषा विचेष्टते । तदियमवधार्यतामनुरागवीरस्य कापि दुर्विबोधगभीरविक्रमवैचित्री । तथा हि ।

प्रत्याहृत्य मुनिः क्षणं विषयतो यस्मिन्मनो धित्सते
बालासौ विषयेषु धित्सति ततः प्रत्याहरन्ती मनः ।
यस्य स्फूर्तिलवाय हन्त हृदये योगी समुत्कण्ठते
मुग्धेयं बत पश्य तस्य हृदयान्निष्क्रान्तिमाकाङ्क्षति ॥ १७ ॥

---

(क) भगवति, कोऽत्र प्रतीकारः ।

(ख) भगवति, कुटिला खलु जटिला इदं नाभिनन्दिष्यति ।

---

अङ्गनासु आग्रहो यस्य स कृष्णः ॥ **सा खल्विति** । सा जटिला त्वया मद्गिरा संदिश्यताम् । संदेशमेवाह—आत्मविधयैव स्पष्टं कृष्णं राधानिकटे घटयिष्यामि, न तु नन्दपुत्रम् । इति हेतोर्जटिले त्वं मा शङ्किष्ठाः ॥ **भजन्त्या इति** । कालिन्दीपुलिनकलभेन्द्रस्य कृष्णस्य राधाया हृदयरूपकुञ्जे विजयं पराक्रमं तनुरेव वनी वदति सूचयति । वनीत्यल्पविवक्षायां ङीलम् । राधायाः कीदृश्याः । तदाडम्बरघटा अपह्नोतुं संगोपयितुं यत्नाद् भजन्त्याः । वन-

**नान्दीमुखी**—भअवदि, ईरिसस्स भाअस्स विण्णाणें मूढम्हि । (क)

**पौर्णमासी**—वत्से, सत्यमात्थ । दुर्गमोऽयं गाढानुरागविवर्तः । श्रूयताम् ।

पीडाभिर्नवकालकूटकटुतागर्वस्य निर्वासनो
निःस्यन्देन मुदां सुधामधुरिमाहंकारसंकोचनः ।
प्रेमा सुन्दरि नन्दनन्दनपरो जागर्ति यस्यान्तरे
ज्ञायन्ते स्फुटमस्य वक्रमधुरास्तेनैव विक्रान्तयः ॥ १८ ॥

तदेहि । भावमस्याः परीक्षेवहि । (इत्युपसृत्य ।) वत्से, किमपि पृष्टव्यासि ।

यतिः प्रेमोदात्तः सुचरितकथा गोकुलपुरे
प्रसिद्धा ते शुद्धे जनिरपि च लक्ष्मीवति कुले ।
अपूर्वां कुर्वाणा मतिमिह महासाहसमयीं
सुहृद्धचस्त्वं लज्जामपि किमिव राधे न भजसि ॥ १९ ॥

(राधिका कातर्यमभिनीय सलज्ज ललिताकर्णमूले लगति ।)

**ललिता**—अज्जे, विण्णवेदि राही । (ख) (इति संस्कृतेन ।)

दोषोद्गारं त्वमपि कुरुषे हा मयि व्याकुलायां
पादेऽभ्यस्ते भगवति शपे नापराध्यामि साध्वी ।

---

(क) भगवति, ईदृशस्य भावस्य विज्ञाने मूढास्मि ।
(ख) आर्ये, विज्ञापयति राधा ।

---

पक्षे हस्तिकुम्भस्थमदस्य आमोदेन मधुरा । जनान्तिक एकान्ते ॥ **वत्स इति** । विवर्तो विकारविशेष ॥ **पीडाभिरित्यादि** । पीडाभिः कटुतागर्वस्य निर्वासन निःसारण यतः मुदां आनन्दानां निःस्यन्देन क्षरणेन सुन्दरि नान्दीमुखि, जागर्तीति स्वरूपलक्षणकथनं सदा जाग्रदेव तिष्ठति। न तु प्रेम्णः स्वापः संभवतीत्यर्थः। तेनापि ज्ञायन्ते केवलमनुभूयन्ते, न तु वक्तु शक्यन्ते । तद्वाचकशब्दाभावादिति भावः । वक्रमधुराः अस्य माधुर्यस्य वक्र एव मार्गः कश्चित्तादृशजनानुभवैकमात्रगोचर इत्यर्थः । अय भावः—अय प्रेमा प्रश्नोत्तराभ्यां न ज्ञातु शक्यः । किं तु कथंचिदतिभाग्येनैतत्सजातीयप्रेम्णश्चेदाश्रयः स्यात्तदा कण्टकवेधस्य व्यथासादृश्यानुसारेण शक्तिरेधव्यथाया इवैतस्य ज्ञान स्यादिति तेनात्मनस्तधाभावे भवत्या यतितव्यमिति ॥ **यतिरिति** । यतिः प्रेम्णा उदात्तः प्रपुल्लः । गोकुलपुरे तव सुचरितकथा प्रसिद्धा शुद्धे लक्ष्मीवति च कुले तव जनिः ॥ **दोषोद्गारमिति** ।

पर्णैः कर्णोत्पलवलयिभिस्ताड्यमानोऽपि धूर्तो
न श्यामात्मा मम तनुपरिष्वङ्गरङ्गं जहाति ॥ २० ॥

**पौर्णमासी**—(सेर्ष्यमिवालोक्य ।) मुग्धे, किमन्यां प्रौढमुद्रां नोद्दण्डयसि।

**राधा**—(सरोषम् । संस्कृतेन ।)

क्रोशन्त्यां करपल्लवेन बलवान्सद्यः पिधत्ते मुखं
धावन्त्यां भयभाजि विस्तृतभुजो रुन्धे पुरः पद्धतिम् ।
पादान्ते विलुठत्यसौ मयि मुहुर्दष्टाधरायां रुषा
मातश्चण्डि मया शिखण्डमुकुटादात्माभिरक्ष्यः कथम् ॥ २१ ॥

**पौर्णमासी**—(स्वगतम् ।) निष्कम्पतया बद्धमूलोऽयं प्रेमपलाशी ।
(प्रकाशम् ।)

त्वया नीतो वामः फलकमिलदङ्गो मधुरिपुः
सुखाशाभिः क्रीडाकुतुकिनि कुतो नेत्रपदवीम् ।
कुकूलाग्निज्वालापटलकटुकेलिर्यदधुना
दशेयं हन्त त्वां ज्वलयति हिमानीव नलिनीम् ॥ २२ ॥

**राधा**—(कृष्णमुद्दिश्य सोपालम्भमात्मगतम् ।)

शिशिरय दृशौ दृष्ट्वा दिव्यं किशोरमितीक्षित'
परिजनगिरा विश्रम्भात्त्वं विलासफलाङ्कित. ।
शिव शिव कथं जानीमस्त्वामवक्रधियो वयं
निबिडवडवावह्निज्वालाकलापविकासिनम् ॥ २३ ॥

---

कर्णस्थोत्पल वलयिभिर्वेष्टनशालै पर्णै अर्थादुत्पलपत्रैस्ताड्यमानोऽपि ॥ **मुग्ध इति ।** अन्या उच्चै फूत्कारादिरूपा प्रौढमुद्रा कथ न उद्दण्डयसि ॥ **क्रोशन्त्यामिति ।** मातश्चण्डीति। तथाप्यविचारेण मा प्रत्येव कुप्यसि। किं वक्तव्यम् ॥ **निष्कम्पेति ।** प्रेमपलाशी प्रेमवृक्ष ॥ **त्वयेति ।** वाम प्रतिकूल किं वा मनोहर इति ज्ञात्वा सुखाशाभि कुतो नेत्रपदवीं नीत इति । कुकूल तुषानल अतितापकत्वविवक्षया अग्निस्तस्य ज्वालासमूहेन कटु केलि खेला यस्या । एवभूता दशा ॥ **शिशिरयेति ।** परिजनगिरा विश्रम्भादिति। तर्हि परिजना एव तव तु खदा इति चेत्तत्राह—अवक्रधियो वयमिति। बहुवचनेन यथाहं तथैव मत्परिजना अपि सरला एव त्वामेतादृश तेऽपि कथ जानीयुरतस्त्वमेव तु खद इत्यर्थ ॥ पूर्वरागे जाते नायिका कन्दर्पलेख माल्य च नायकाय दूतीद्वारा समर्पयतीति

**पौर्णमासी**—(सस्नेहमालोक्य ।) वत्से, क्षणमेकान्ते निविश्य पुष्पेषु लेखो निर्मीयताम्, यथायं कृष्णाय स्वसखीभ्यां समर्प्यते ।

(राधा सखीभ्यां सह निष्क्रान्ता ।)

**पौर्णमासी**—(परिक्रम्य ।) नान्दीमुखि, कृष्णोऽपि नातिदूरे भविष्यति, यदत्र दक्षिणतो नैचिकीनिकुरम्बस्य हम्बारवाडम्बरोऽयमम्बरमाक्रामति । तदहं स्नानार्थं व्रजामि ।

(इति निष्क्रान्ते ।)

(ततः प्रविशति कृष्णः ।)

**कृष्णः**—(सोद्वेगम् ।)

यदवधि तदकस्मादेव विस्मायिताक्षं
नवतडिदभिरामं धाम साक्षाद्बभूव ।
तदवधि चिरचिन्ताचक्रसक्ता विरक्ति
मम मतिरुपभोगे योगिनीव प्रयाति ॥ २४ ॥

(पुरोऽनुसृत्य ।) हन्त, रङ्गणमाल्यमुपनेतुं प्रस्थितो वयस्यः कथं विलम्बते ।

(प्रविश्य माल्यहस्तः)

**मधुमङ्गलः**—कधं अज्ज दुम्मणाएदि पिअवअस्सो । होदु । पसङ्गदो जाणिस्सम् । (इति परिक्रम्य कृष्णं पश्यन् । स्वगतम् । संस्कृतेन ।) (क)

फुल्लप्रसूनपटलैस्तपनीयवर्णा-
मालोक्य चम्पकलतां किल कम्पतेऽसौ ।

---

(क) कथमद्य दुर्मनायते प्रियवयस्यः । भवतु । प्रसङ्गतो ज्ञास्यामि ।

---

कामशास्त्रलीला पौर्णमास्याह—**वत्स इति** । पुष्पेष्विति सप्तम्यन्तम् । तथा च पुष्पेषु लिखनं कृत्वा कान्तहस्ते सखीद्वारा समर्पय । एवं कन्दर्पलेखस्य अर्थद्वयमपि प्राकरणिकम् ॥ 'गोषु दिव्या तु नैचिकी' इत्यमरः । मम मध्याह्नकृत्यं वर्तते तस्मादहं स्नानार्थं व्रजामीति ॥ **यदवधीति** । योगिनीवेति । ब्रह्मसाक्षात्कारे याते सतीत्यर्थः ॥ पुरोऽग्रे पुष्पवन्तं चम्पकवृक्षमनुसृत्य राधिका स्मृत्यारूढा । तदनन्तरं तस्या बिम्बाधररसादर्शनेन रङ्गणपुष्पं स्मृत्यारूढम् । तत्स्मरणतः रङ्गणमाल्यार्थं प्रस्थितस्य मधुमङ्गलस्य कृष्णः स्मरति—**हन्तेति** ॥ **फुल्लेति** । फुल्लप्रसूनैः करणैः सुवर्णवर्णां चम्पकलताम् । निरङ्को निर्मलः । तिलकशब्दोऽत्र

शङ्के निरङ्कनवकुङ्कुमपङ्कगौरी
राधास्य चित्तफलके तिलकीबभूव ॥ २५ ॥

(इत्युपसृत्य ।) भो, गेण्ह । (इति माल्यं निवेदयति ।) (क)

**कृष्णः**—(अनाकर्णितकेनैव ।)

कनकाद्रिनिकेतकेतकीकलिकाकल्पकलेवरद्युतिः ।
हृदि सा मुदिरालिमेदुरे चपला मा किमलंकरिष्यति ॥ २६ ॥

**मधुमङ्गलः**—(स्वगतम् ।) फलिदं मे तक्केण । (प्रकाशमुच्चैः ।) भो पिअवअस्स, समुहे विक्कोसन्दं वि कीस मं ण पेच्छसि । (ख)

**कृष्णः**—(सावहित्थम् ।) सखे, चम्पकलताया लावण्याकृष्टेन मया नोपदृष्टोऽसि ।

**मधुमङ्गलः**—सच्चं च्चेअ भणासि, किं तु संचारिणीए चम्पअलदाए । (ग)

**कृष्णः**—सखे, काममसंभाव्यश्चम्पकलतायाः संचारः ।

**मधुमङ्गलः**—वअस्स, क्खण विरमेदु वङ्कत्तणम् । उज्जुअ कहेहि कहं सुण्णहिअओसि त्ति । (घ)

**कृष्णः**—(सस्मितम् ।) सखे, माला विना ।

---

(क) भो, गृहाण ।

(ख) फलितं मे तर्केण । भो प्रियवयस्य, समुखे विक्रोशन्तमपि कस्मान्मां न पश्यसि ।

(ग) सत्यमेव भणसि, किं तु सचारिण्याश्चम्पकलतायाः ।

(घ) वयस्य, क्षण विरमतु वक्रत्वम् । ऋजु कथय कथं शून्यहृदयोऽसीति ।

---

श्रेष्ठार्थक । तथा च श्रीकृष्णस्य चित्तरूपपटे सर्वा एव व्रजसुन्दर्यो यद्यपि लिखिता भवन्ति तथापि तासां मध्ये राधिका तु तिलकीबभूव । नत्वन्यत्र एतादृशचिन्तापरो मम वयस्य कदापि दृष्ट इति । राधावर्णस्य सादृश्य कुङ्कुमस्य, तत्सादृश्य कनकस्य, तत्सादृश्य चम्पकलताया , तामपि दृष्ट्वा कम्पते। अहो रागोद्रेक इति भाव ॥ अनाकर्णितकेन अत्युत्कण्ठया । मधुमङ्गलस्य वाक्यमश्रुत्वैवाह—**कनकेति** । मुदिरालिमेदुरे मेघश्रेणीस्निग्धे । हृदि वक्षसि । चपला विद्युत् । क्षणमात्रस्पर्शेऽप्यहं कृतार्था भवामीति भाव ॥ सचारिण्या सचार कर्तुं शील यस्यास्तस्या ॥ **शून्यहृदयोऽसीति** । शून्यमना असीत्यर्थ ॥ कृष्णस्तु हृदयपद

**मधुमङ्गलः**—बालं त्ति भण । (क)

**कृष्णः**—मुधेयं ते विशङ्का ।

**मधुमङ्गलः**—(संस्कृतमाश्रित्य ।)

न जानीषे मूर्ध्नश्च्युतमपि शिखण्ड यदखिल
न कण्ठे यन्माल्य कलयसि पुरस्तात्कृतमपि ।
तदुन्नीतं वृन्दावनकुहरलीलाकलभ हे
स्फुट राधानेत्रभ्रमरवरवीर्योन्नतिरियम् ॥ २७ ॥

**कृष्णः**—(स्वगतम् ।) कथ निखिलमेव तर्कित धूर्तेन । तदल प्रतार्य । (प्रकाशम् ।) सखे, यथार्थमात्थ । तदाकर्ण्यताम् ।

मम राधा निसर्गस्थ प्रतीपमनयन्मन ।
महाज्यैष्ठीव सहसा प्रवाह सौरसैन्धवम् ॥ २८ ॥

**मधुमङ्गलः**—णूण अच्छीण दे पच्चक्खीभूदा एसा । (ख)

**कृष्णः**—अथ किम् । सुवलत सा परिचिक्ये च । (इत्यौत्सुक्यमभिनीय ।)

भ्रमद्भ्रूवल्लीके प्रतिदिशमपाङ्गस्य वलनै
कुरङ्गीभ्यो भङ्गीभरमुपदिशन्तीमिव दृशो ।
ततस्ता बिम्बौष्ठीं कलयति मयि क्रोधविकटो
मनोजन्मा पौष्प धनुरनुपम सज्जमकरोत् ॥ २९ ॥

**मधुमङ्गलः**—अवि णाम सवुत्त अण्णोण्णदसणम् । (ग)

(क) बालामिति भण ।

(ख) नूनमक्ष्णोस्ते प्रत्यक्षीभूतेषा ।

(ग) अपि नाम संवृत्तमन्योन्यदर्शनम् ।

वक्ष स्थलपरमित्यभिप्रेत्याह—**मालामिति** ॥ **नेत्यादि** । भ्रमरो हि दानगन्धलोलुपो गण्डे वसन् हस्तिनमुद्वेजयतीति लोकप्रसिद्धि ॥ **अल प्रतार्येति** । 'अलखल्वो प्रतिषेधयो प्राचाम्' इति क्त्वाप्रत्यय । प्रतारण न कर्तव्यमित्यर्थ । **ममेत्यादि** । निसर्गस्थ स्वभावस्थ मन प्रतीप अस्वस्थ अनयत् । अकरोदित्यर्थं । सुरसिन्धुर्गङ्गा । 'सिन्धुना सरिति स्त्रियाम्' इत्यमर । तस्या प्रवाह महाज्यैष्ठी यथा प्रताप नयति । अन्यपूर्णिमाभ्योऽपि तद्दिने समुद्रस्य क्षोभोद्रेकेणोद्वेल्ल्ये तरङ्गावघातिताया गङ्गाया स्रोत परावर्तते ॥ (उन्नीत विचारितम् ॥) अथ किम् । तदुक्त भूतमेवेत्यर्थ । **भ्रमदित्यादि** । प्रतिदिश भ्रमद्भ्रूवल्लीके अपाङ्गस्य वल्गने चरणे दृशोर्भङ्गीभरं कुरङ्गीभ्य उपदिशन्तीं उपदेश कुर्वन्तीं ताम् ॥ अपि

कृष्णः—नहि नहि ।

तस्या' सखे मुखतुषारमयूखबिम्बे
दूरान्मगाक्षिपदवीमधिरूढमात्रे ।
निर्बन्धतः शपथकोटिभिरम्बयाहं
नीतः क्षणादहह सद्मनि भोजनाय ॥ ३० ॥

मधुमङ्गलः—वअस्स, चिट्ठन्ति वहुलाओ बल्लवसुन्दरीओ, तदवि कीस तुमं एकाए राहीए णिब्भरं अणुरज्जसि । (क)

कृष्णः—सखे, राधायामसाधारणी कापि माधुरी । तथा हि ।

तस्याः कान्तिद्युतिनि वदने मञ्जुले चाक्षियुग्मे
तत्रासाक यदवधि सखे दृष्टिरेषा निविष्टा ।
सत्यं ब्रूमस्तदवधि भवेदिन्दुमिन्दीवरं वा
स्मारं स्मारं मुखकुटिलताकारिणीयं हृणीया ॥ ३१ ॥

मधुमङ्गलः—दंसणदो पढम ज्जेव तत्थ तुज्झ राओ मए तक्किदो त्थि । ता किं त्ति लावण्णोवाहिओ त्ति भणासि । (ख)

कृष्णः—सखे, सत्यमात्थ । स्वचित्ताभिनिवेशादेव तस्या कोऽपि महि मोन्नाहः प्रतीयते । तथा हि ।

यत्र प्रकृत्या रतिरुत्तमाना तत्रानुमेयः परमोऽनुभावः ।
नैसर्गिकी कृष्णमृगानुवृत्तिर्देशस्य हि ज्ञापयति प्रशस्तिम् ॥ ३२ ॥

(क) वयस्य, तिष्ठन्ति बहुला बल्लवसुन्दर्यः, तदपि कस्मात्त्वमेकस्या राधाया निर्भरमनुरज्यसि ।

(ख) दर्शनत प्रथममेव तत्र तव रागो मया तर्कितोऽस्ति । तत्किमिति लावण्योपाधिक इति भणसि ।

नामेति प्रश्न ॥ तस्या इति । निर्बन्धतोऽत्रादिक शीतलीभवति, अतोऽवश्यमेवागन्त व्यमिति हठेन ॥ तस्या इति । कमनीया द्युतिर्यस्य तथाभूते वदने वदनसादृश्यार्थमिन्दु स्मृत्वा नेत्रसादृश्यार्थमिन्दीवरं च स्मृत्वा हृणीया घृणा लज्जा वा मुखकुटिलताकारिणी भ वेत् ॥ यत्रेति । प्रकृत्या स्वभावेनैव, नतु गुणाद्युपाधिभि । उत्तमानामेव, न स्वसुरप्रकृ

(नेपथ्ये ।)

सहि सारिए, दिट्ठो तुए एत्थ बल्लविन्दणन्दणो । (क)

**कृष्णः**—सखे, नेदीयानयं सुकुमारीकण्ठध्वनिरुदञ्चति । तदत्र तूष्णीमास्महे ।

(ततः प्रविशतो ललिताविशाखे ।)

**ललिता**—पेक्ख एसो दिट्ठिआ पुरदो कण्हो । ता उपसप्पह्म । (इत्युभे तथा कृत्वा ।) जअदु जअदु गोउलाणन्दो । (ख)

**कृष्णः**—सखि ललिते, शङ्के मनोहारिकुसुमपत्रमादातुमद्य वृन्दाटवीमध्येऽवतीर्णासि ।

**ललिता**—विण्णादं वि णूणं आआरेण संगोवेसि जं दादुंति ण भणासि । ता गेण्ह णं कण्णिआरकोरअपत्तम् ।(इत्यनङ्गलेखं कृष्णकरेऽर्पयति ।) (ग)

**कृष्णः**—(स्वगतम् ।) चेतः, समाश्वसिहि समाश्वसिहि । त्वदभीष्टबीजस्याङ्कुरोऽयमिति शङ्के ।

**मधुमङ्गलः**—भोदि ललिदे, किं इमिणा अक्खराणां पत्तेण । सक्कराणां पत्तं समप्पेहि । (घ)

**कृष्णः**—सखे, वाचय पत्रम् । कदाचिदेतन्नः कर्णरसायनस्य पात्री भवति ।

**मधुमङ्गलः**—भो वअस्स, दिट्ठा तुम्ह गोआलजादीए वदाण्णदा । णं

---

(क) सखि सारिके, दृष्टस्त्वयात्र बल्लवेन्द्रनन्दनः ।

(ख) पश्यैष दिष्ट्या पुरतः कृष्णः । तदुपसर्पावः । जयतु जयतु गोकुलानन्दः ।

(ग) विज्ञातमपि नूनमाकारेण संगोपयसि यद्दातुमिति न भणसि । तद्गृहाणैतत्कर्णिकारकोरकपत्रम् ।

(घ) भवति ललिते, किमेतेनाक्षराणां पत्रेण । शर्कराणां पत्रं समर्पय ।

---

सीनाम् । इत्यस्याप्य अनुवृत्तिः मकारः गैरागिरी, न तु येनापि यत्नान्वारिता ॥ आकारेणेति । दातुमिति पदस्य पूर्वं 'आ' इत्युपसर्गास्याधिक्यप्रयोगेण संगोपयसीत्यर्थः । अथवा आकारेण इङ्गितेन । सामान्यविशेषेणेत्यर्थः । 'आकारस्त्विङ्ग इङ्गितम्' इत्यमरः । उभावप्यर्थौ प्रकरणिनौ ॥ मपर्तीति । तथा च एतत्पत्रेणास्माकं किं प्रयोजनम् । भोजनोपयोगि शर्क-

अम्ह बम्हणजादिं जेव्व गौरएण वन्दामि, जं तहिं दिअहे जण्णिअबम्ह-णीहिं चउव्विहेण अण्णेण भोइद म्ह । (इति लेखं वाचयति ।)

धरिअ पडिच्छन्दगुणं सुन्दर मम मन्दिरे तुमं वससि ।
तह तह रुन्धसि वलिअं जह जह चइदा पलाएमि ॥ ३३ ॥ (क)

**कृष्णः**—सखे, दुरधिगमार्था तावदियं गाथा । तेन पुनर्भण्यताम् ।

(मधुमङ्गलस्तथा करोति ।)

**कृष्णः**—(सानन्द स्वगतम् ।) कुलस्त्रियो हि धर्मभीरवो भवन्ति। तदुपेक्षया भावनिष्ठा निष्टङ्कयामि । (इति सरम्भमभिनीय प्रकाशम् ।) हंहो, पश्यत पश्यत ।

स्निग्धैरेभिः सखिभिरखिलैर्धेनुवृन्दानुसारी
नारीवार्ताविमुखहृदयः काननान्ते चरामि ।
मा स्वैरिण्यस्तदपि यदिमा दूषयन्ति प्रकामं
तद्विज्ञप्तिं द्रुतमिह जरद्गोपगोष्ठ्यां करिष्ये ॥ ३४ ॥

(इति कृत्रिमामर्षेण द्रुत परिक्रामति ।)

**मधुमङ्गलः**—(स्मितमाकृत्य ।) भो बम्हआरिसिहामणे, क्खणं णिवट्टिअ इमाओ दुम्मुहगोइआओ पच्चुत्तरेण णिज्जित्तिअ विड्डविहि। अहं क्खु एदं सव्वं धिट्ठाणं वुत्तन्तं गोउलेसरीए विण्णविस्सम् । (इति पाणौ धृत्वा व्यावर्तयति ।) (ख)

---

(क) भो वयस्य, दृष्टा युष्मद्गोपालजातेर्वदान्यता । नन्वस्मद्ब्राह्मणजातिमेव गौरवेण वन्दे, यत्तस्मिन्दिवसे याज्ञिकब्राह्मणीभिश्चतुर्विधेनान्नेन भोजिता स्मः ।

धृत्वा प्रतिच्छन्दगुण सुन्दर मम मन्दिरे त्व वससि ।
तथा तथा रुणत्सि वलित यथा यथा चकिता पलाये ॥

(ख) भो ब्रह्मचारिशिखामणे, क्षण निवर्त्य इमा दुर्मुखगोपिका. प्रत्युत्तरेण

---

निर्मितदीर्घाकारमिष्टानरूप पत्र देहीत्यर्थ ॥ **धृत्वेति** । प्रतिच्छन्द चित्रपटम् । वलित वलयुक्त यथा स्यात्तथा रुणत्सीत्यर्थ ॥ **पुनर्भण्यतामिति** । तस्य वाक्यमाधुर्यस्यातृप्त्या पुनरास्वादनार्थम् । प्रकट त्वौदासीन्यव्यञ्जनार्थम् । ममात्र झटित्यनुसधानमपि न भवतीति ज्ञापयितुम् ॥ **धर्मभीरवो भवन्तीति** । अतोऽधर्मभयजन्योपेक्षया भावस्य निष्ठा निर्धा

(उभे परस्परमवेक्ष्य वैलक्ष्यं नाटयतः ।)

कृष्णः—सखि विशाखे, चातुरक्षिकं प्रेक्षणमपि नास्ति । कुतस्तावत्परितो रोधनम् । तदनुयामि । केनाप्यपरेण नागरेण तस्याः स्वान्तमुच्चालितम् ।

विशाखा—(सस्कृतमाश्रित्य ।)

कस्तादृग्व्रजमण्डलेऽथ वलते शक्यो गरीयानसौ
येनोच्चालयितुं बलात्कुलवती चेतोगिरिग्रामणीः ।
इत्यस्माभिरवक्रविक्रमलवादुत्क्षिप्तगोवर्धनो
हेतुस्त्वं किल पङ्कजाक्ष यदुभिस्त्रासि निष्टङ्कितः ॥ ३५ ॥

मधुमङ्गलः—अइ वाआलिए, चिट्ठ चिट्ठ । दिट्ठो मए उक्खित्तदण्डमण्डलेहिं गोवेहिं गोवड्ढणो धरिदो । तुमं कीस एक्कं ज्जेव पिअवअस्सं संभावेसि । (क)

कृष्णः—ललिते, अलमतिप्रसङ्गेन । तन्निवर्तस्व ।

ललिता—सुन्दर, सव्वगोउलसुहकारिणो वि तुअत्तो कधं सा एका ज्जेव दुक्खं अरिहदि वरिअसि । (ख)

कृष्णः—

सङ्गो मे मधुमङ्गलो न सहते धर्माध्वनो विच्युतिं
श्रीदामा परिमार्गयन्मम नहि छिद्राणि निद्रायति ।
कंसः शाम्ति खलः क्षितिं कथमतो मुग्धे विधेयं मया
निःशङ्कं कुलसुन्दरीपरिभवज्वालामहासाहसम् ॥ ३६ ॥

---

निर्जित्य विद्रावय । अद्य मन्त्रिद सर्वं धृष्टानां वृत्तान्तं गोकुलेश्वर्यै विज्ञापयिष्यामि ।

(क) अयि वाचालिके, तिष्ठ तिष्ठ । दृष्टो मया उत्क्षिप्तदण्डमण्डलैर्गोपैर्गोवर्धनो धृतः । त्वं कस्मादेकमेव प्रियवयस्यं संभावयसि ।

(ख) सुन्दर, सर्वगोकुलसुखकारिणोऽपि त्वत्तः कथं सा एकैव दुःखमर्हति वरीयसि ।

---

[illegible] ॥ [illegible] ॥ [illegible] । [illegible]
[illegible] ॥ पञ्चात्[illegible] । [illegible]

ललिता—(सामर्षम् । सस्रुतेन ।)

अन्त क्लेशकलङ्किताः किल वय यामोऽद्य याम्या पुरीं
नायं वञ्चनसंचयप्रणयिनं हासं तथाप्युज्झति ।
अस्मिन्संपुटिते गभीरकपटैराभीरपल्लीविटे
हा मेधाविनि राधिके तव कथं प्रेमा गरीयानभूत् ॥ ३७ ॥

(इति रोदिति ।)

मधुमङ्गलः—अइ मुद्धे, सअलसत्थविसारओ जस्स अम्हारिसो अमच्चो होइ सोवि किं एदं धम्मं अदिक्कमइस्सइ । ता अल वणरुदिदेण। (क)

विशाखा—(स्वगतम् ।) णं राहीए गुञ्जअलिअ कण्हस्स देन्ती हं इङ्गिदं लक्खेमि । (ख) (प्रकाशम् । सस्क्रतेन ।)

उदीर्णरागेण करम्बितान्तरा परिस्फुरत्कृष्णमुखी गुणाञ्चिता ।
गुञ्जावली मञ्जुतरावलम्बता साराधिकेयं तव कण्ठसगमम् ॥ ३८ ॥

(इति कण्ठे स्वयमर्पयति ।)

कृष्णः—(स्मित्वा सकपटेर्ष्यम् ।)

रागिणमपि सुकठोर सुवृत्तमपि मुहुरुदीर्णमालिन्यम् ।
युवतीनामिव भाव नहि गुञ्जाहारमिच्छामि ॥ ३९ ॥

(इत्यजानन्निव कण्ठादवतार्य रङ्गणमालिकामर्पयति ।)

---

(क) अयि मुग्धे, सकलशास्त्रविशारदो यस्यास्मादृशोऽमात्यो भवति सोऽपि किमिम धर्ममतिक्रमिष्यति । तदल वनरुदितेन ।

(ख) नून राधाया गुञ्जावलीं कृष्णाय ददती अहमिङ्गित लक्षयामि ।

---

दुर्बोधो यो विक्रमस्तस्य त्वात् ॥ वरीयसि(?) ॥ निद्रायति । 'द्रै 'स्वप्ने' ॥ अन्त क्लेशेति । अन्त क्लेशेन कलङ्किताश्चिह्निता सत्य । मृत्योरनन्तरमप्यय क्लेश स्थास्यत्येवेति भाव । वञ्चनसमूहस्य प्रणयिन करणशील हास तथापीत्यकारुण्य व्यज्यते । अन्यासा प्रेमा भवतु कामान्धीकृतधिया मेधाविन्यास्तव तु न युज्यते इति भाव । गभीरकपटै सपुटिते व्याप्ते आभीरपल्लीना व्रजनागरीणा विटे कामुके ॥ उदीर्णेति । सारेण अधिका इय मञ्जुलतरा गुञ्जावली तव कण्ठसगम अवलम्बताम् । पक्षे सा प्रसिद्धा राधिका गुञ्जावलीव मञ्जुलतरा सत्यवलम्बताम् । उदीर्ण उद्गतो राग रक्तिमा प्रेम च तेन करम्बित व्याप्त अन्तर बहि , पक्षे अन्त करण च यस्या । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥' इत्यमर । परित स्फुरन् कृष्ण कृष्णवर्ण , पक्षे कृष्णेति नाम च मुखे यस्या ॥ रागिणमिति । दृष्टान्तपक्षे बहि प्रकाशाभावेन

**विशाखा**—(स्वगतम् ।) इमस्स भमो वि अम्हाण मङ्गलो संवुत्तो । (क)
(इति वस्त्रेण सगृणोति ।)

**ललिता**—हला, गोविआकोडिभुअङ्गस्स इमस्स अक्खलिदं अच्चरिअं बम्हचरिअं दिट्ठिआ पअडीभूदम् । ता अम्हेवि गदुअ तं अत्थाणाणुराइणीं राहिअं णिवट्टावेम्ह । (ख)

**विशाखा**—सहि, जुत्त मन्तेसि । (ग)

(इत्युभे परिक्रामत ।)

**ललिता**—विशाहे, तुम गदुअ इमाए रङ्गणमालिआए पिअसहीं आसासेहि । अहं क्खु एद वुत्तन्त भअवदीए विणिवेदिस्सम् । (घ)

(इति निष्क्रान्ते ।)

**मधुमङ्गलः**—भो, आदरिज्जन्तं वि अप्पाणं कीस आदरावेसि । इदं क्खु पच्चादावपव्वताहिरोहणस्स अहिरोहिणीणिम्माणं दाव । (ङ)

**कृष्णः**—सखे, सत्य ब्रवीषि । साहसिक्यं हसितेनैवानुष्ठितम् ।

**मधुमङ्गलः**—पेक्ख गोईजुअलं णेत्तपहं अदिक्कमिदम् । (च)

---

(क) एतस्य भ्रमोऽप्यस्माक मङ्गल. सवृत्त. ।

(ख) हला, गोपिकाकोटिभुजङ्गस्य एतस्य अस्खलितमाश्चर्यं ब्रह्मचर्यं दिष्ट्या प्रकटीभूतम् । तत् आवामपि गत्वा तामस्थानानुरागिणीं राधिका निवर्तयाव ।

(ग) सखि, युक्त मन्त्रयसि ।

(घ) विशाखे, त्व गत्वा एतया रङ्गणमालिकया प्रियसखीमाश्वसिहि । अहं खल्विदं वृत्तान्त भगवत्यै विनिवेदिष्यामि ।

(ङ) भो , आद्रियमाणमप्यात्मान किमित्यादरयसि । इद खलु पश्चात्तापपर्वताधिरोहणस्याधिरोहिणीनिर्माण तावत् ।

(च) पश्य गोपीयुगल नेत्रपथमतिक्रान्तम् ।

---

शातुमशक्यम् । सुवृत्त वर्तुलाकारम्, पक्षे सुचरित्रमपि मालिन्य पक्विमा ॥ सखीति । अय भाव —यद्यस्मान्तरो रागो वर्तते तदा राधिकां निवर्तयाव इत्युक्त्या आवयोर्गमने सत्येतस्य धैर्यस्य भविष्यति ततश्चावां परावर्तयिष्यते किं वा स्वयमेव तस्या प्राप्त्युपायमनुरात्स्यति ॥ भो इत्यादि । 'नि श्रेणिस्त्वधिरोहणम्' इत्यमर । 'णिद्दो' इति स्यात्नम् ॥ साद विनय सदृशा प्रवर्तनम् ॥ पश्येति । तत्परावर्तनार्थं मां प्रति न वक्तव्यमिति भाव ॥

**कृष्णः**—(सानुतापम् ।)

श्रुत्वा निष्ठुरतां ममेन्दुवदना प्रेमाङ्कुरं भिन्दती
स्वान्ते शान्तिधुरा विधाय विधुरे प्रायः पराञ्चिष्यति ।
किं वा पामरकामकार्मुकपरित्रस्ता विमोक्ष्यत्यसू-
न्हा मौग्ध्यात्फलिनी मनोरथलता मृद्वी मयोन्मूलिता ॥ ४० ॥

**मधुमङ्गलः**—दाणिं किं एत्थ सरणम् । (क)

**कृष्णः**—सखे, मत्यनङ्गलेखं विना नान्यत्पश्यामि शरणम् ।

**मधुमङ्गलः**—किं एत्थ लेहसाहणम् । (ख)

**कृष्णः**—वशीकारक्रियाप्रशस्तो रागवान् जवानिर्यासः ।

**मधुमङ्गलः**—एहि । उड्डमहाडइमण्डिद णादिदूरे पक्कन्दणतीत्थं गच्छेम्ह । (ग)

(इति निष्क्रान्तौ ।)

(ततः प्रविशति विशाखया प्रबोध्यमाना राधा ।)

**राधा**—(सखेदम् । संस्कृतेन ।)

यस्योत्सङ्गसुखाशया शिथिलिता गुर्वी गुरुभ्यस्त्रपा
प्राणेभ्योऽपि सुहृत्तमाः सखि तथा यूयं परिक्लेशिताः ।

---

(क) इदानीं किमत्र शरणम् ।

(ख) किमत्र लेखसाधनम् ।

(ग) एहि । उद्भमहाटवीमण्डित नातिदूरे प्रस्कन्दनतीर्थं गच्छाव ।

---

**श्रुत्वेति** । विधुरे दुःखिते स्वान्ते शान्तिधुरा विधाय । मृद्वी जाताङ्कुरत्वात् कोमला ॥ **एहीति** । प्रस्कन्दनतीर्थं मदनमोहनस्य निकटे ज्ञेयम् ॥ **ततः प्रविशतीति** । अत्र सगत्यर्थं कथा रचनीया । विशाखा राधानिकट आगत्य श्रीकृष्णमुखान्निर्गतमुपेक्षाबोधकवाक्यमश्रावयित्वा, अपि तु स्वेन कल्पितं तदनुरागबोधकवाक्यं श्रावयित्वा, निर्माल्यमाल्यं च दर्शयित्वा, आनन्दमूर्छां प्रापयामास । क्षणानन्तरं विशाखाया मुखस्याप्रसन्नतां दृष्ट्वा कृष्णस्योपेक्षैव निर्धारिता । एवं तदङ्गसंबन्धि माल्यं च केनचिन्मिषेणानीतमिति निश्चितम् ।

धर्मः सोऽपि महान्मया न गणितः साध्वीभिरध्यासितो
धिग्धैर्यं तदुपेक्षितापि यदहं जीवामि पापीयसी ॥ ४१ ॥

विशाखा—(ससंभ्रमम् ।) सहि, समास्सस समास्सस । (इति रङ्गणमालां घ्राणेऽर्पयति ।) (क)

राधिका—(संज्ञां लब्ध्वा ।) हला, किं एदं अच्चरिअं जं संमोहणं वि पवोहेदि । (ख)

विशाखा—(माल्य निवेद्य । संस्कृतेन ।)

अङ्गोत्तीर्णविलेपनं सखि समाकृष्टिक्रियायां मणि-
र्मन्त्रो हन्त मुहुर्वशीकृतिविधौ नामास्य वंशीपतेः ।
निर्माल्यस्रगियं महौषधिरिह स्वान्तस्य संमोहने
नासां कस्तिसृणां गृणाति परमाचिन्त्यां प्रभावावलीम् ॥ ४२ ॥

राधिका—(स्वगतम् ।) एव्वंगुणेण इमिणा उवेक्खिदं वि णं हदसरीरं कधं अज्जवि णिल्लज्जाहं धारेमि । ता कालिअहदपवेसोवाअं अणुसरिस्सम् । (प्रकाशम् ।) विसाहे, विण्णवेहि गुरुअणं जं वारहाइच्चतित्थं गदुअ सूरं अच्चिदुकामम्हि । (ग)

विशाखा—साहु सुमराइदं पिअसहीए जं अज्जाए जडिलाए वि इदं ज्जेव्व दाणिं आदिट्ठह्मि । ता एहि । (घ)

---

(क) सखि, समाश्वसिहि समाश्वसिहि ।

(ख) हला, किमिदमाश्चर्यं यत्संमोहनमपि प्रबोधयति ।

(ग) एवंगुणेनानेनोपेक्षितमपि एनं हतशरीरं कथमद्यापि निर्लज्जाहं धारयामि । तत्कालियहृदप्रवेशोपायमनुसरिष्यामि । विशाखे, विज्ञापय गुरुजनं यद्द्वादशादित्यतीर्थं गत्वा सूर्यमर्चयितुकामास्मि ।

(घ) साधु स्मारितं प्रियसख्या यदार्यया जटिलयापि इदमेवेदानीमादिष्टास्मि । तदेहि ।

---

अतः सखीदमाह—संस्कृतेनेति ॥ हलेति । यन्मास्य प्रसंगे मोहजनकमपि अधुना प्रबोधयति ॥ अङ्गोत्तीर्णेति । आसां मणिमन्त्रमहौषधीनां यः परमाचिन्त्यां प्रभावावलीं

(इत्युभे परिक्रामतः ।)

**राधिका**—(सव्यामोहम् ।)

मं परिहरइ मुउन्दो तहवि दुरासा विरोहिणी डहई ।
मह सहि गहीरणीरा सरणं बहिणी किदन्तस्स ॥ ४३ ॥ (क)

**विशाखा**—हला, पेक्ख पत्थाणे मङ्गलसूअणाइं सउणाइं । ता एवं मा भण । (ख)

**राधिका**—(पुरो दृष्ट्वा ।) हला, कधमेसा पुव्वदिसामुहे अआलिआ संझा दीसइ । (ग)

**विशाखा**—ण क्खु संझा । पेक्ख पक्कन्दणे सूरस्स वल्लहा परिफुल्लिदा उडुराइ रेहदि । ता इमस्स अग्घं कादुं णं अवचिणह्म । (घ)

(इत्युभे तथा कुरुतः ।)

(ततः प्रविशति वटुना सह कृष्णः ।)

**कृष्णः**—सखे, सेयं राधाधरकान्तितस्करी जवाराजिः ।

**मधुमङ्गलः**—अदो णं णिप्पीडिअ णिम्माहि पच्चणङ्गलेहम् । (ङ)

**कृष्णः**—(परिक्रम्य सविस्मयम् ।)

एषा नान्तिकवर्तिनी सुरगिरेरैलावृती हन्त भू-
रम्ये किं कलयामि काञ्चनरुचामुद्गारगौरीर्दिशः ।
आं ज्ञातं मणिनूपुरध्वनिभरादालीजनालंकृता
कान्तीनां कुलदेवता विलसितुं वृन्दाटवीं विन्दति ॥ ४४ ॥

---

(क) मां परिहरति मुकुन्दस्तदपि दुराशा विरोधिनी दहति ।
मम सखि गभीरनीरा शरणं भगिनी कृतान्तस्य ॥

(ख) हला, पश्य प्रस्थाने मङ्गलसूचनानि शकुनानि । तदेवं मा भण ।

(ग) हला, कथमेषा पूर्वदिशामुखे आकालिकी सन्ध्या दृश्यते ।

(घ) न खलु संध्या । पश्य प्रस्कन्दतीर्थे सूर्यस्य वल्लभा प्रफुल्लिता उडुराजी राजति । तदस्या अर्घ्यं कर्तुमेतदवचिनुवः ।

(ङ) अत एतन्निष्पीड्य निर्माहि प्रत्यनङ्गलेखम् ।

---

न गृणाति । अपि तु सर्व एव ॥ एषेति । सुरगिरेः सुमेरोः ऐलावृती इलावृतसम्बन्धिनी भूरेषा हन्त निश्चित न भवति । तत्किं काञ्चनकान्तीनामुद्गारेण गौरीः पीतवर्णा दिशः क-

मधुमङ्गलः—हन्त भो, मग्गिज्जन्तम्मि वाउरासाहणे कुरङ्गी सअ हत्थं गदा। (क)

कृष्णः—(सानन्दम्।) सखे, साधु विज्ञातम्। तदत्र वृक्षान्तरितौ शृणुवः किमसौ प्रस्तौति।

(इति तथा स्थितौ।)

राधिका—(विशाखामालम्ब्य सास्रम्।) हला, एसो जणो कधापसङ्गे सअं सुमरिदव्वो। (ख)

विशाखा—(सबाष्पम्।) सहि, अच्छीणधीरत्तणादिगुणा भणिज्जसि। ता किंति एव्वं उव्विग्गासि। (ग)

राधिका—सहि, णिग्गुणीकिदह्मि तिणा धुत्तेण। (घ) (इति संस्कृतेन।)

तस्योरस्तटमण्डलं धृतिनदीरोधक्रियापण्डितं
वक्त्रेन्दुः कुलधर्मपङ्कजवनीसंकोचदीक्षाव्रती।
दोर्यूपौ नितरामुदञ्चितचिरव्रीडाभिचाराध्वरौ
हा कष्टं निखिलगिला सखि दृशोर्भङ्गी भुजङ्गी तु सा॥४१॥

कृष्णः—प्रिये, त्वन्माधुर्येण माधवश्च जडीकृत्य निर्गुणामवस्थां नीतोऽयम्।

---

(क) हन्त भो, मृग्यमाणे वागुरासाधने कुरङ्गी स्वयं हस्तं गता।
(ख) हला, एष जनः कथाप्रसङ्गे स्वयं स्मारितव्यः।
(ग) सखि, अक्षीणधीरत्वादिगुणा भण्यसे। तत्किमित्येवमुद्विग्नासि।
(घ) सखि, निर्गुणीकृतास्मि तेन धूर्तेन।

---

स्थास्यामि। निश्चित्याह—नैव स्थावरभूमि, अपि तु मणिनूपुरध्वनिभराद्येतौ। अत्र ज्ञातमिति॥ 'वागुरा मृगबन्धिनी' इत्यमरः॥ स्मर्तव्येति। जनैरिति शेषः। तस्योर इति। धृतिनदी वेगनिर्गलितस्य रोधक्रियायां पण्डितम्। तया च धैर्यस्य वेगनि [illegible] भाव। [illegible] भार्या मतौ। यूप [illegible]। [illegible] अभिचारविधे यज्ञो वा स्यात्। [illegible] दृशोर्भङ्गी भुजङ्गी तु [illegible]

**राधिका**—(आकाशे अञ्जलिं बद्ध्वा । संस्कृतेन ।) हन्त भो बकीहन्त,

गृहान्त' खेलन्त्यो निजसहजबाल्यस्य वलना-
दभद्रं भद्रं वा किमपि नहि जानीमहि मनाक् ।
वयं नेतुं युक्ता. कथमशरणां कामपि दशां
कथं वा न्याय्या ते प्रथयितुमुदासीनपदवीम् ॥ ४६ ॥

**कृष्णः**—प्रिये, क. खलु जिजीविषुर्जीवातुभूताया सिद्धौषधिलताया- मुदास्ते ।

**राधिका**—(निश्वस्य ।) हला, एसा पिआ मे एकाअली तुए अप्पणो कण्ठे धारणिज्जा । (क) (इति कण्ठादेकावलीमुत्तारयति ।)

**विशाखा**—(हठान्निवार्य ।) हला, एव्व अणुचिट्ठन्ती किंति मं डहसि जं ललिदं पडिक्खिअ णिरुज्झम्हि । (ख) (इति रोदिति ।)

**राधिका**—(संस्कृतेन ।)

अकारुण्य. कृष्णो यदि मयि तवाग' कथमिदं
मुधा मा रोदीर्मे कुरु परमिमामुत्तरकृतिम् ।
तमालस्य स्कन्धे विनिहितभुजावल्लरिरियं
यथा वृन्दारण्ये चिरमविचला तिष्ठति तनुः ॥ ४७ ॥

**कृष्णः**—(सास्रम् ।) सखे, दृष्टानुरागस्य साधिष्ठता ।

---

(क) सखि, एषा प्रिया मे एकावली त्वया आत्मन कण्ठे धारणीया ।

(ख) हला, एवमनुतिष्ठन्ती किमिति मा दहसि यल्ललिता प्रतीक्ष्य निरुध्य मास्मि ।

---

गिलन्ती ॥ कृष्ण मधुमङ्गल श्रावयित्वा नीचैराह—**प्रिये इति** ॥ **हन्तेति** । भो बकी हन्त पूतनाघातिन् । बाल्यमारभ्यैव तव स्त्रीवधेऽभ्यासो वर्तत एवेत्यर्थ ॥ **गृहान्त रिति** । वलनाद्वलवत्त्वात् । यदि चाशरणामेता दशा नीता वयम् अधुना उदासीनपदवीं प्रथयितु प्रकटयितु कि न्याय्या न्यायोचिता । तस्मादस्माक वधार्थमेव तव व्यवसाय इति भाव ॥ **अकारुण्य इति** । यदि कृष्णोऽकारुण्य तव कथ मयि आग अपराध । तस्मान्मुधा व्यर्थं मा रोदी । कि तु मे उत्तरकृतिं प्राणत्यागानन्तर अन्त्येष्टिकर्म । सा तूत्तरकृतिर्नान्यजनस्येव करणीया । कि तु तमालस्येत्यादि । तमालस्य स्कन्धे विनिहिता भुजरूपलता यस्या एवभूता मम तनु यथा वृन्दारण्ये सदाविचला सती तिष्ठति तथा करणीया ॥ **साधिष्ठतेति** । 'अन्तिकबाढयोर्नेदसाधौ' इति बाढस्य साधादेश । तथा चानु

राधिका—(स्वगतम् ।) तुवरावेदि मं कावि घणुक्कण्ठा । (प्रकाशम् ।) हला, सूरमच्चिअ किं पि अब्भत्थिदुकामाम्हि । ता जाव सिणाणं कदुअ णिवुत्ता भवे ताव तुमं एत्थ पुप्फं अवचिणेहि । (इति तीर्थाभिमुख द्वित्राणि पदानि गत्वा पुनरात्मगतम् ।) हन्त, सो तिल्लोकमोहणो मुहचन्दो पुणो मए ण दिट्ठो । (इति सोत्कण्ठ निवृत्य प्रकाशम् ।) हला, पसीद पसीद । दंसेहि तं पडिच्छन्दअम् । (क)

विशाखा—सहि, णत्थि एत्थ चित्तफलअम् । (ख)

राधिका—(सव्यथम् ।) तदो पणिहाणेण णं पच्चक्खीकरिस्सम् । (ग) (इति ध्यान नाटयति ।)

कृष्णः—सखे, पीतमपीतपूर्वमुन्मादकं श्रोत्रमाध्वीकम् । तदग्रतो गच्छावः ।

(इत्युभौ तथा कुरुतः ।)

विशाखा—(विलोक्य सानन्द ससभ्रमम् ।) सहि, दिट्ठिआ तुज्झ सुहज्झाणेण फलिदम् । ता झत्ति उग्घाडेहि लोअणम् । (घ)

(राधिका दृशा दरोन्मील्य चमत्कारं नाटयति ।)

विशाखा—(सस्कृतेन ।)

यदर्थं संकीर्णे पतसि हतकन्दर्पकदने
मृदुं वा दुर्वारे ज्वलयसि तनुं प्रेमदहने ।
अखण्डेनापीडं सखि नवशिखण्डेन फलय-
न्विलासी सोऽयं ते स्फुरति पुरतो जीवितपतिः ॥ ४८ ॥

---

(क) त्वरयति मां कापि घनोत्कण्ठा । हला, सूर्यमर्चयित्वा किमप्यभ्यर्थयितुकामास्मि । तद्यावत्स्नानं कृत्वा निवृत्ता भवेय तावत्त्वमत्र पुष्पमवचिनु । हन्त, स त्रैलोक्यमोहनो मुखचन्द्रः पुनर्मया न दृष्टः । हला, प्रसीद प्रसीद । दर्शय एनं प्रतिच्छन्दम् ।

(ख) सखि, नास्त्यत्र चित्रफलकम् ।

(ग) ततः प्रणिधानेनैनं प्रत्यक्षीकरिष्यामि ।

(घ) सखि, दिष्ट्या तव शुभध्यानेन फलितम् । तज्झटिति उद्घाटय लोचनम् ।

---

रागस्यानिश्चयत्वमित्यर्थः । यन्न्यू[नेऽ]पि म सदृशवर्णे तमालवृक्षे संयोगवाञ्छनेऽसदो रागस्य पराकाष्ठेति भावः ॥ यदर्थमिति । संकीर्णे व्यापके । अखण्डेन नवशिखण्डेन । आपीडं

राधिका—अम्महे सिविणस्स माहुरी । (क)

विशाखा—अविसद्धे, एसो दे अपुव्वो सिविणो जो णिद्दाए विणा वि णिप्पण्णो । (ख)

कृष्णः—

असौ दृग्भङ्गीभिः कुसुमशरमङ्गीकृतशरं
सृजन्ती दन्तीन्द्रक्रमणकमनीयालसगतिः ।
अदूरे रम्भोरूरिह वदनबिम्बस्य सुषमा
समारम्भादम्भोरुहमधुरिमाणं दमयति ॥ ४९ ॥

राधिका—(कृष्णे दृगन्तं नर्तयन्ती स्वगतम् ।) साहु रे हिअअ, साधु । दिट्ठिआ मुहुत्तं विलम्बिदम् । (ग)

कृष्णः—(स्मित्वा ।) धूर्ते विशाखिके, समन्तान्मृग्यमाणा दिष्ट्या त्वमत्र दृष्टासि यदद्य भवत्या रूपसादृश्यादपाकिमगुञ्जाहारेण मां प्रतार्य दुर्लभा मे रङ्गणमालिकापनीता ।

मधुमङ्गलः—भो, णं राहीए कण्ठादो दीसन्तीं अप्पणो रङ्गणमालिअं सअं जेव्व आअडिअ गेण्ह । (घ)

कृष्णः—सखे, जानतापि भवता किमिदमन्याय्यमुपन्यस्तम् । न खलु स्वप्नेऽपि मया कामिनीस्पर्शः स्मर्यते ।

राधिका—(स्वगतम् ।) इमस्स परिहासो वि एसो संकिदाए मम सच्चो पडिभादि । (ङ)

---

(क) अहो स्वप्नस्य माधुरी ।

(ख) अविश्रब्धे, एष तेऽपूर्वः स्वप्नः यो निद्रया विनापि निष्पन्न ।

(ग) साधु रे हृदय, साधु । दिष्ट्या मुहूर्तं विलम्बितम् ।

(घ) भो, एना राधाया कण्ठतो दृश्यमानामात्मनो रङ्गणमालिकां स्वयमेवाकृष्य गृहाण ।

(ङ) एतस्य परिहासोऽप्येष शङ्किताया मम सत्यः प्रतिभाति ।

---

शिरोऽवतंसम् । कलयन् धारयन् ॥ असाविति । कुसुमशर कन्दर्पम् । कथंभूतम् । अङ्गीकृतशरम् । हस्तिपादविक्षेपादपि कमनीया अलसा गतिर्यस्या ॥ अपाकिमेति ।

**विशाखा**—(विहस्य ।) अयि वराङ्गणातरङ्गिणं महासाअर, चिट्ठ चिट्ठ । दाणि वि इमाइं दीसन्ति तुज्झ अङ्गेसु ताणं चिण्हाइं । (क) (इति सस्मितेन ।)

आकृष्टानि कटाक्षभङ्गिभिरलं गोपाङ्गनानां त्वया
रक्तान्यत्र मनांसि यानि निमिषोन्मुक्तानि नेत्राण्यपि ।
तान्येतानि भवान्नवाञ्जनतनो गुञ्जावलीना छल-
त्पिच्छाना च सदा प्रसाधनधिया संधारयन्नन्दसि ॥ ९० ॥

**कृष्णः**—(सहर्षमात्मगतम् ।)

प्रमदरसतरङ्गस्मेरगण्डस्थलायाः
स्मरधनुरनुबन्धिभ्रूलतालास्यभाजः ।
मदकलचलभृङ्गीभ्रान्तिभङ्गीं दधानो
हृदयमिदमदाङ्क्षीत्पक्ष्मलाक्ष्याः कटाक्षः ॥ ९१ ॥

(नेपथ्ये ।)

णत्तिणि विसाहे । (ख)

**कृष्णः**—कथमकाण्डे जरापाण्डुरेयं जटिला ।

(प्रविश्य ।)

**जटिला**—(पुरो दृष्ट्वा स्वगतम् ।) कहं एत्थ कण्हो । (प्रकाशम् ।) विसाहे, किंति इमाइं धूअगन्धरत्तचन्दनाइं तुए विसुमरिदाइं । (ग)

---

(क) अयि वराङ्गनातरङ्गिणीनां महासागर, तिष्ठ तिष्ठ । इदानीमपीमानि दृश्यन्ते तव अङ्गेषु तासां चिह्नानि ।

(ख) नप्त्रि विशाखे ।

(ग) कथमत्र कृष्णः । विशाखे, किमित्येतानि धूपगन्धरक्तचन्दनानि त्वया विस्मृतानि ।

---

गुञ्जादारभ्य निश्चलतमानीनम् ॥ अयीति । इमानि चिह्नानि दृश्यन्ते इत्यन्वयः । आकृ-ष्टेत्यादि । हे नवाञ्जनतनो, गुञ्जावलीना व्रजगोपाङ्गनानां रक्तानि मनांसि, एव पिच्छाना-न्यभिनिर्मितानि प्रसाधनमाभरणं तद्बुद्ध्या धारयन् ॥ प्रमदेति । मत्तचपलभृ-ङ्गीनां भ्रमो यस्मात्तादृशीं दधानः कटाक्षः प्रमत्तरसस्पृष्टे अक्षिणी यस्याः ॥ कथमि-

**कृष्णः**—(स्वगतम् ।)

चन्द्रिकां चन्द्रलेखायाश्चकोरे पातुमुद्यते ।
पिधानं विदधे हन्त शरदम्भोधरावली ॥ ५२ ॥

(प्रकाशम् ।) मातुर्मातुलानि, प्रणमामि ।

**जटिला**—मोहण, वल्लअकिशोरीउले अवङ्कदिट्ठि होहि । (क)

**मधुमङ्गलः**—(विहस्य ।) भो दधीचिहड्डकक्कसे, एसो सव्वदो उदारदिट्ठी च्चेअ मज्झ पिअवअस्सो । तुमं क्खु केअरच्छी । ता अप्पाणं आसंसेहि । (ख)

**जटिला**—भो किशोरीभुअङ्ग, कीस तुमं आअदोसि । (ग)

**कृष्णः**—आर्ये, लोकोत्तराणु(नु)रागचमत्कारिणीयं मुजवालक्ष्मीः कं वा नाकर्षति ।

**जटिला**—(स्वगतम् ।) णूणं भअवदीए विज्जापहावसंभाविदा इमस्स एत्थ उवसत्ती । (प्रकाशम् ।) मोहण, झत्ति इदो गच्छेहि । (घ)

**कृष्णः**—अयि जल्पाकि वृद्धे, किमित्याकुलासि । स्वच्छन्दतो गच्छेयम् ।

---

(क) मोहन, वल्लवकिशोरीकुले अवक्रदृष्टिर्भव ।

(ख) भो दधीच्यस्थिकर्कशे, एष सर्वदोदारदृष्टिरेव मम प्रियवयस्यः । त्वं खलु केकराक्षी । तदा आत्मानमाशिंषय ।

(ग) भो किशोरीभुजङ्ग, कस्मात्त्वमागतोऽसि ।

(घ) नूनं भगवत्या विद्याप्रभावसंभाविता अस्यात्रोपसत्तिः । मोहन, झटिति इतो गच्छ ।

---

स्यादि । जरया पाण्डुरा श्वेतवर्णा ॥ **चन्द्रिकामिति** । जरापाण्डुरत्वाच्छरदम्भोधरस्थानीया जटिला ॥ **भो दधीचीति** । भो दधीच्यस्थिकर्कशे वज्रादपि कठोरे इत्यर्थः । वाकनद्ध्राक्षी त्व आत्मानमेवाशीर्वादं कुरु । येन तव दृष्टेर्वक्रत्व दूरीभवतीत्यर्थः ॥ **आर्ये इति** । मुग्धुजवानां ओढ्रुपुष्पाणां लक्ष्मीः शोभा । पक्षे मुग्धु जवो यशोव्यञ्जकचिह्नविशेषो यस्याः सा । इयं राधैव लक्ष्मीस्तत्तुल्यत्वात् । यद्वा शोभामयीत्वात् । कीदृशी । लोकोत्तरो योऽनुणतो रागः रक्तिमा तेन चमत्कारिणी । पक्षे स्पष्टम् ॥ **णूणमिति** । मुरारिद्वारा भगवत्या चन्द्रसंमुख मम विद्याप्रभावेण स्वतन्त्रत्व यद्वा तव वधूनिकटे प्रेरयिष्यामि, न

जटिला—(कुटिलं विलोक्य । संस्कृतेन ।)

निर्धौतानां निखिलधरणीमाधुरीणां धुरीणा
कल्याणी मे निवसति वधूः पश्य पार्श्वे नवोढा ।
अन्तर्गोष्ठे चटुल नटयन्नत्र नेत्रत्रिभागं
निःशङ्कस्त्वं भ्रमसि भविता नाकुलत्वं कुतो मे ॥ १३ ॥

कृष्णः—मृषाशङ्किनि वृद्धे, मा प्रलापं कृथाः । यावदेतां ते वधूमाकर्णय तावन्मान्यां भावयामि ।

जटिला—विसाहे, किं ति एत्तिअ विलम्बिदासि । (क)

विशाखा—(स्मित्वा ।) अज्जे, णं दुल्ललिदं कुरङ्गं पेक्खन्ती विम्हिदम्हि । (इति सदृष्टिक्षेपम् ।)

अकरुण मक्किअ चङ्गं कुरङ्ग पेम्मेण संगदं हरिणीम् ।
विहलं कूद्दणचट्टुलो तुमं बणादो वणं भमसि ॥ १४ ॥ (ख)

जटिला—अइ अत्थाणदुरग्गहे, मुञ्च कुरङ्गकोदूहलम् । (ग)

मधुमङ्गलः—पिअवअस्स, पेक्ख । एसो सतिण्णो वि कीरजुआणो णं महुरं दाडिमीं ण पडिपज्जइ । (घ)

(क) विशाखे, किमित्येतावद्विलम्बितासि ।

(ख) आर्ये, एतं दुर्ललितं कुरङ्गं पश्यन्ती विस्मितास्मि ।
अकरुण त्यक्त्वा चङ्गां कुरङ्ग प्रेम्णा सगतां हरिणीम् ।
विफलं कूर्दनचटुलस्त्वं वनाद्वनं भ्रमसि ॥

(ग) हे (अयि) अस्थानदुर्ग्रहे, मुञ्च कुरङ्गकौतुकम् ।

(घ) प्रियवयस्य, पश्य । एष सतृष्णोऽपि कीरयुवा इमां मधुरां दाडिमीं न प्रतिपद्यते ।

तु नन्दपुत्रम्, तदेवाधुना इतमित्यर्थः ॥ अर्थेति । जल्पसि बहुभाषिणि ॥ निर्धौतानामिति । निर्धौतानां क्षालितानाम् । सारभूतानामिति यावत् । यावदेतां तव वधूमिति श्रुत्वा तावन्मान्यां माननीयां भावयामि । न तु प्रकारान्तरम् । पक्षे मा अन्यां नान्यदीयाम् । सीताभिप्रायः ॥ अज्जे इति । तावदेतां वचन कृष्ण प्रति । कुरङ्ग हरिणम्, पक्षे कुत्सित रङ्ग यस्य

**कृष्णः**—(स्मित्वा ।)

हृदि ताडितोऽपि दाडिमि सुमनोरागेण ते रुचिं वहता ।
पक्षिमरसासि किं वा नेति शुकः शङ्कयोदास्ते ॥ ५९ ॥

(विशाखा सदृग्भङ्ग राधिकामवलोकते ।)

**राधिका**—(स्वगतम् ।) हिअअ, समस्सस समस्सस। (क) (इति सखेदमपवार्य । संस्कृतेन ।)

पीतं न वागमृतमत्र हरेरशङ्कं
न्यस्तं मयास्य वदने न दृगञ्चलं च ।
रम्ये चिरादवसरे सखि लब्धमात्रे
हा दुर्विधिर्विरुरुधे जरतीच्छलेन ॥ ६६ ॥

**जटिला**—(स्वगतम् ।) अम्हहे कण्हदिट्ठिणो माहप्पे, जं वहुए सो उवसग्गो तह णत्थि । (प्रकाशम् ।) विसाहे, पेक्ख । अदिक्कमदि मज्झण्हो । ता तुरियं सूरमण्डवं पविसम्ह । (ख)

(इति तिस्रो निष्क्रान्ताः ।)

**कृष्णः**—सखे, कौमुदीयं पौर्णमासीमनुवर्तते । तदेहि । तामेव प्रतिपद्येवहि ।

(इति निष्क्रान्तौ ।)

इति मन्मथलेखो नाम द्वितीयोऽङ्कः ।

---

(क) हृदय, समाश्वसिहि समाश्वसिहि ।

(ख) अहो कृष्णदृष्टेर्माहात्म्यम्, यद्वध्वा स उपसर्गस्तथा नास्ति । विशाखे, पश्य । अतिक्रमते मध्याह्नः । तत्त्वरितं सूर्यमण्डपं प्रविशामः ।

---

तम् ॥ **अकरुण इति** । चङ्ग मनोहरम् । 'त्वङ्गचङ्गौ मनोहरे' इति कोषः । **हृदीति** । हे दाडिमि, तव रुचिं कान्तिं वहता ते तव सुमनोरागेण पुष्पस्य रक्तिम्ना हृदि ताडितोऽपि यन्त्रितोऽपि शुकः किं पक्षिमरसासि न वा इति शङ्कया उदास्ते । तेन यदा पुष्पिता स्यमासी(?) तदवा(व)धि शुकस्य त्वयि औदासीन्य नास्ति किं पुनरिदानीं फलितायामिति भाव. । पक्षे सुष्ठु मनसो रागेण पक्षिमप्रेममयशृङ्गाररसवती न वेति शङ्कया इत्यर्थः ॥ **सदृग्भङ्गमिति** । राधे कृष्णाभिप्रायः कश्चिदवगम्यत इति ॥ **अपवार्येति** । जटिलां वञ्चयित्वा एकान्ते इत्यर्थः ॥ **सखे इति** । इय राधिकैव कौमुदी । तस्या एवाधीना राधेयमित्यर्थः ॥ इति द्वितीयोऽङ्कः ॥

तृतीयोऽङ्कः ।

(ततः प्रविशति ललितयानुगम्यमाना पौर्णमासी ।)

**पौर्णमासी**—वत्से, नूनं मत्तल्पमाणो नाभिनन्दति नन्दकुमारस्ते सखीसंगमम् ।

**ललिता**—भअवदि, दुब्बोहं क्खु लोओत्तराणां चित्तं। ण झत्ति विअसदि । (क)

**पौर्णमासी**—(पुरोऽवलोक्य ।) वत्से, पश्य कदम्बवाटिकायां मधुमङ्गलेन सार्धं समङ्गलं वर्धते मधुमर्दनः । (पुनर्निरूप्य ।)

परामृष्टाङ्गुष्ठत्रयमसितरत्नैरुभयतो
वहन्ती संकीर्णौ मणिभिररुणैस्तत्परिसरौ ।
तयोर्मध्ये हीरोज्ज्वलविमलजाम्बूनदमयी
करे कल्याणीयं विहरति हरेः केलिमुरली ॥ १ ॥

(ततः प्रविशति यथानिर्दिष्टः कृष्णः ।)

**कृष्णः**—(सानुतापम् ।)

त्रपया नितरां पराङ्मुखी सहसा स्मेरसखीधृताञ्चला ।
गमिताद्य हठेन राधिका न कथं हन्त मया भुजान्तरम् ॥ २ ॥

(निःश्वस्य ।) सखे मधुमङ्गल, खञ्जरीटदृशः सा विलासमञ्जरी चोरयति मे चित्तचञ्चरीकम् । (इत्यौत्सुक्यं नाटयन् ।)

---

(क) भगवति, दुर्बोधं खलु लोकोत्तराणां चित्तम् । न झटिति विकसति ।

---

**समङ्गलमिति** । समङ्गलं यथा स्यात्तथा मधुमङ्गलेन सह कृष्ण आनन्देन वर्धते । **परामृष्टेति** । उभयतः शिरसि पुच्छे च । अङ्गुष्ठत्रयपरिमितप्रदेशं व्याप्य असितरत्नैः इन्द्रनीलमणिभिः परामृष्टा खचिता । तत्परिसरौ अरुणैर्मणिभिः संकीर्णौ । तथा च शिरोऽङ्गुष्ठवर्णनानन्तरमङ्गुष्ठत्रयं व्याप्य एवं पुच्छाङ्गुष्ठत्रयात्पूर्वमङ्गुष्ठत्रयं व्याप्य यौ द्वौ परिसरौ तौ व्याप्येत्यर्थः ॥ **तयोर्मध्य इति** । तथैव व्याप्येयम् । हीरैरुज्ज्वलं यद्विमलं जाम्बूनदं कनकं तन्मयी ॥ **त्रपयेति** । राधिकामारभ्य तस्याः पश्चान्स्मार्त्वं गूढतामिति मधुमङ्गलेन यदा उक्तम्, तदैव न यथ मया राधिका भुजान्तरं गमिता प्रापिता एव मयि दृष्टम्, तन्निकटं गते मयि सा सहसा त्रपया पराङ्मुखी अभविष्यत्, तदनन्तरं स्मेरा सखी तस्या अञ्चलं धृत्वा मम निकटं प्रापयिष्यत्, इति श्रीकृष्णस्य मनोऽनुतापः । खञ्जरीटदृशो राधाया विलासमञ्जरी विलासबाणः । चित्तचञ्चरीकं चित्तभ्रमरम् ।

छिन्नः प्रियो मणिसरः सखि मौक्तिकानि
वृत्तान्यहं विचिनुयामिति कैतवेन ।
मुग्धं विवृत्य मयि हन्त दृगन्तभङ्गीं
राधा गुरोरपि पुरः प्रणयाद्व्यतानीत् ॥ ३ ॥

**पौर्णमासी**—(दूरत एव कृष्णं निर्वर्ण्य । साशङ्कम् ।)
अक्ष्णोर्द्वन्द्वं प्रसरति दरोद्घूर्णतारं मुरारेः
श्वासाः क्लृप्तां किल विचकिलैर्मालिकां म्लापयन्ति ।
केयं धन्या वसति रमणी गोकुले क्षिप्रमेतां
नीतस्तीव्रामयमपि यया कामपि ध्याननिष्ठाम् ॥ ४ ॥

अथवा कृतं संदेहेन । वत्साः, राधिकैव खल्वत्र कारणम् ।

**कृष्णः**—(पौर्णमासीं पश्यन्नुपसृत्य ।) भगवति, प्रणमामि ।

**पौर्णमासी**—नागर, गोपीस्तनतटीष्वलंपटीभव ।

**कृष्णः**—(किंचिद्विहस्य ।) कृतं पिष्टपेषिणीभिराशीर्भिर्यदहमेव गोपीति प्रसिद्धां श्यामां वल्लीमपि न पाणिपल्लवेन स्पृशामि ।

**मधुमङ्गलः**—(विहस्य ।) भोः, किं अम्हाणं सामए गौरी ज्जेव मग्गिज्जइ । (क)

**पौर्णमासी**—(सनर्मस्मितम् ।)
गोपेश्वरस्य तनयोऽसि नयोपपन्नः
ख्यातस्तथा व्रजकुले भुजयोर्बलेन ।
लीलाशतैस्तदपि किं कुलयोषितस्त्व-
मुन्मादमुद्वहसि माधव राधिकायाः ॥ ५ ॥

(क) भोः, किमस्माकं सा(श्या)मया गौर्येव मृग्यते ।

छिन्न इति । मणिसरो हारः ॥ अक्ष्णोरिति । विचकिलैर्मल्लिकापुष्पैः । यया रमण्या अयं श्रीकृष्णोऽप्येतां ध्याननिष्ठां नीतः । प्रधाने कर्मण्यभिधेयेऽन्यादीनां द्विकर्मणामप्रधानकर्मणि कृष्णे प्रत्ययः ॥ नागर इति । अलंपटो भव लम्पटो मा भूः, अलमतिशयेन पटीभव । पटायमानः सदा तिष्ठेत्यर्थः ॥ किंचिदिति । गूढार्थबोधव्यञ्जकं किंचिद्विहसनम् । प्रकृत्यर्थमादाय प्रत्याह—कृतं पर्याप्तम् । अलमित्यर्थः । 'गोपी श्यामा

मधुमङ्गलः—अइ विवरीदवादिणि वुड्ढिए, चिट्ठ चिट्ठ ।
तुज्झ राहिआए ज्जेव्व एसो अम्हपिअवअस्सो उम्मादिओ ।
जं सेहरसिङ्गवेत्ताइ दाणिं कहिं विभट्ठाइं ति ण जाणादि ॥ १ ॥ (क)

कृष्णः—(सलज्जम् ।) आर्ये, वाचाटोऽयं बटुर्मृषा जल्पति । किंतु निश्चितं ते व्याहरामि । न तासु मच्चित्तरागस्त्वङ्गोपीषु । तदत्र तत्त्वतः पृच्छतामयम् ।

मधुमङ्गलः—अज्जे, सच्चं सच्चम् । अम्हपिअवअस्सहिअअस्स अज्जवि राओ तुम्हगोइआणं अङ्गेसु ण मए दिट्ठोत्थि । पत्थुद ताणं अङ्गराओ ज्जेव्व इमस्स हिअइ दीसइ । (ख)

कृष्णः—(सप्रणयरोषम् ।) धिङ्मूर्ख, विश्रम्भादाद्दतोऽपि जिह्मतां न जहासि ।

पौर्णमासी—सत्यमाह बटुः । तथाहि ।

कामं सद्गुणमण्डलाश्रयतया तन्वन्महिष्ठां रुचिं
वैचित्रीभरभाक्सदा शुभदशाश्रेणीश्रियामास्पदम् ।
वंशीहुंकृतिलीलया शिथिलतामेणीदृशां नीयते
वासः कंसनिसूदनाय भवता देहेषु गेहेष्वपि ॥ ७ ॥

---

(क) अयि विपरीतवादिनि वृद्धे, तिष्ठ तिष्ठ ।
तव राधिकयैव एषोऽस्मत्प्रियवयस्य उन्मादितः ।
यस्माच्छेखरशृङ्गवेत्राणीदानीं कस्मिन्विभ्रष्टानीति न जानाति ॥

(ख) आर्ये, सत्यं सत्यम् । अस्मत्प्रियवयस्यहृदयस्य अद्यापि रागो युष्मद्गोपिकानामङ्गेषु न मया दृष्टो(ऽ)स्ति । प्रत्युत तासामङ्गराग एवास्य हृदये दृश्यते ।

---

सारि वा स्मात्' इत्यमरः ॥ 'वाचाटो बहुगर्ह्यवाक्' इत्यमरः ॥ काममिति । गुणानां यन्मण्डलं तदाश्रयतया महिष्ठां रुचिं कान्तिं तन्वन्विस्तारयन् । वैरस्यं वा गः । अन्यो यो गुण(दि)संतानविजनकोऽन्यादयः रुचिरोचकतां तन्वन् विस्तारयन् । वैचित्री कुण्डलीविकल्पैर्वर्णानि वसन्तचन्दनदिग्भोगानां विचित्रप्रसरत्वात् । शुभा या दशस्य दशा श्रेणी तस्य याः श्रियः शोभास्तासामास्पदमाश्रय । शुभमदानां गुणकृत्कर्दनामेव

**मधुमङ्गलः**—अज्जे, किं वि ण जाणासि जं वंसीहुंकिदिलीलाएत्ति भणासि । दिट्ठ तहिं दिअहे कण्णआण तीरट्ठिदाइ अम्बराइ अप्पणो हत्थेण उक्खिविअ इमिणा क्खन्धे णिक्खित्ताइं । (क)

**कृष्णः**—(सभ्रूभङ्ग चटुमावार्य ।) आर्ये, हुकारादपि तथाभावाद्धवद्गोपीनामभिव्यक्त' साध्वीभावप्रभाव ।

**ललिता**—(सस्कृतेन ।)

केनापि धूर्तपतिना खलु शिक्षितोऽसि
मन्त्र वशीकरणकारणमौषधं वा ।
पुण्योज्ज्वलान्यखिलगोपविलासिनीना
येन त्वया गृहसुखानि विलुण्ठितानि ॥ ८ ॥

**मधुमङ्गलः**—सच्च कहेदि ललिदा । अण्णधा मन्तादिमन्तरेण पव्वदुत्तुङ्गा महादाणआ णविन्दीवरादोवि सोम्मसीअलपइदिणा कध इमिणा सहरिज्जन्ति । (ख)

**ललिता**—अज्ज, जस्स सुमरण वि तथा संतावण त एद अप्पणो वअस्स मा क्खु सीअल मण । (ग)

**मधुमङ्गलः**—भो वअस्स, पइदिसीअलो वि तुमं गोइआहि उण्होत्ति भणिज्जसि । ता प्पसिअ जाणिस्सम् । (इति कृष्णवक्षसि हस्त न्यस्य ससभ्रमम् ।) अहो, सच्च ज्जेव कहेदि ललिदा । (क्षण विमृश्य ।) ललिदे, विण्णादं वि-

(क) आर्ये, किमपि न जानासि यद्वशीहुकृतिलीला इति भणसि । दृष्ट तस्मिन्दिवसे कन्यकाना तीरस्थितान्यम्बराण्यात्मनो हस्तेनोत्क्षेप्यानेन स्कन्धे निक्षिप्तानि ।

(ख) सत्य कथयति ललिता । अन्यथा मन्त्रादिमन्तरेण पर्वतोत्तुङ्गा महादानवा नवेन्दीवरादपि सौम्यशीतलप्रकृत्या कथमनेन सह्रियन्ते ।

(ग) आर्य, यस्य स्मरणमपि तथा सतापन तमेतमात्मनो वयस्य मा खलु शीतल भण ।

या दशान्तर्दशाभ्यश्च परपरास्तासु या प्रियस्तच्छात्रप्रोक्ता सपत्तय ॥ सत्यमिति । महापरिष्टमाय निदलवधादी मन्त्रौषधादीनां सामभ्यासभवान्मद्वयस्यस्य प्रकृतिरेवेय नारीगणमनोहारिणीति द्योतितम् ॥ भो इति । हृदयवर्तिन्या ज्वलनेन ततोऽपि मद्वय

ण्णादम् । तुअ राआ च्चेअ णूणं उण्णा जाए हिअअवट्टणीए चन्दकोडिसीअलो वि एस उण्णीकिओ । (क)

**ललिता**—अज्ज, एत्थ राअपट्टपत्थरहिअए ताए दुरन्तपेम्मसोकुमज्जहदाए महसहीए कुदो पवेसो संभावीअदि । (ख)

**मधुमङ्गलः**—(सरोषम् ।) चवले, अह्मवअस्सो तदो वि तुह्मसहीदो णिब्भरं सिणेहकोमलो जं एसो वञ्चिदनिन्दो जोइन्दो विअ एकग्गचित्तो णं ज्जेव सव्वदा चिन्तेइ । (ग)

**कृष्णः**—(सापत्रपम् ।) धिग्बालिश, कृतमलीकेन नर्मपुञ्जेन ।

**ललिता**—(स्वगतम् ।) दिट्ठिआ वड्ढदि पिअसही । (घ)

**पौर्णमासी**—सुन्दर, विश्राम्यतु नर्ममुद्रा । आकर्णय मद्विवक्षितम् ।

हित्वा दूरे पथि धवतरोरन्तिकं धर्मसेतो-
भङ्गोदग्रा गुरुशिखरिणं रंहसा लङ्घयन्ती ।

---

(क) भो वयस्य, प्रकृतिशीतलोऽपि त्वं गोपिकाभिरुष्ण इति भण्यसे । तत्स्पृष्ट्वा ज्ञास्यामि । अहो, सत्यमेव कथयति ललिता । ललिते, विज्ञातं विज्ञातम् । तव राधिकैव नूनमुष्णा यया हृदयवर्तिन्या चन्द्रकोटिशीतलोऽप्येष उष्णीकृतः ।

(ख) आर्य, अत्र राजपट्टप्रस्तरहृदये तस्या दुरन्तप्रेमसौकुमार्यहृताया मत्सख्याः कुतः प्रवेशः संभाव्यते ।

(ग) चपले, मम वयस्यस्ततोऽपि तव सखीतो निर्भरं स्नेहकोमलो यस्मादेष वञ्चितनिद्रो योगीन्द्र इव एकाग्रचित्त एनामेव सर्वदा चिन्तयति ।

(घ) दिष्ट्या वर्धते प्रियसखी ।

---

स्तस्य प्रेमाभवदिति व्यञ्जितम् ॥ अङ्गेति । राजपट्टप्रस्तरः राजसिंहासनस्य प्रस्तरः । कुतः प्रवेशः संभाव्यते तेन यद्यनुरूपेणास्य हृदयं कथं सख्याः प्रेम पतेत् इति ज्ञातव्यमिति व्यज्यते ॥ सरोषमिति । [illegible] निद्राभङ्गस्यापि पर्यन्तगाने [illegible] । नाटके [illegible] ललिता [illegible]—चपलेत्यादिना ॥ हित्वेति । हे सुन्दर, [illegible] । [illegible] । [illegible] दूरे पथि हित्वा । [illegible] यत्र [illegible] । [illegible] । [illegible] ...... [illegible] । गुरु [illegible] गुरुजन [illegible] गुरुजन-

लेभे कृष्णार्णव नवरसा राधिकावाहिनी त्वां
वाग्वीचीभिः किमिव विमुखीभावमस्याः करोषि ॥ ९ ॥

मधुमङ्गलः—अइ, शुद्धबुद्धिए अज्जवि एदं जेअ पुच्छसि । पेक्ख कूअताणं हदकोकिलाणं वित्तासणत्थं मए एदं पुप्फकोदण्डं णिम्मिदम् । (क)

**पौर्णमासी**—चन्द्रानन, सापि वत्सा

आलीनां प्रतिहाररोधनविधौ वीक्ष्य प्रयत्नावलीं
बाला तर्कितमाधवीपरिमलस्फूर्तिर्भयाद्वेपते ।
किंचालोक्य सुधांशुकान्तसलिलस्पन्दानलिन्दे क्षणा-
देणाङ्कोदयशङ्किनी विकलतामातन्वती मूर्छति ॥ १० ॥

**कृष्णः**—(स्वगतम् ।) हन्त, कठोरोऽयं दशाविवर्तः ।

**पौर्णमासी**—सुन्दर,

प्रणयिषु मिलितेषु प्रेमभाजामुपेक्षा
घटयति कटुपाकान्युच्चकैर्दूषणानि ।
दिनमणिरनुरागी प्रोज्झ्य संध्या हि रक्तां
तमसि निखिलमुग्रे मज्जयत्येष लोकम् ॥ ११ ॥

---

(क) अयि, शुद्धबुद्ध्याद्यापीदमेव पृच्छसि । पश्य कूजतां हतकोकिलानां वित्रासनार्थं मयेदं पुष्पकोदण्डं निर्मितम् ।

---

मेव शिखरिणमिति वा । रंहसा वेगेन । नवो नूतनः रसो जलीयस्वादुत्वम् । श्रोतोभिः क्वाप्यपर्युषितत्वात् । नव शान्तशृङ्गारादयो रसा यस्याम् । क्वचिद्धि श्लेषादौ निर्वेदादिस्थायित्वेन शान्तादीनामुद्बोधात् । त्वं तु समुद्र इव वाग्भिरेव वीचीभिः किमिव वैमुख्यं करोषीति ॥ **वित्रासनार्थमिति** । तेन वाचा प्रातिकूल्याचरणमस्य न वास्तवं त्वया ज्ञेयं प्रत्युतैतस्येदृशीं दशामालोक्य स्वयमेव त्वं शीघ्रं तत्प्राप्त्युपायं चिन्तयेति द्योतितम् ॥ **सापीति** । अपिकारेणाभिव्यज्यमानार्थमङ्गीत्साह—**आलीनामिति** । प्रतिहारस्य द्वारस्य । **सुधांशुकान्तेति** । चन्द्रकान्तशिलाभ्यो गलितान् जलबिन्दूनित्यर्थ. ॥ **प्रणयिष्विति** । कटुपाकानि कटुः पाक उदर्को येषु । तान्येवाह—**दिनमणिरिति** । **निखिलमिति** । अस्मदादिललितादिप्रभृतिकं प्रायः समस्तगोकुलमेव सन्ध्यास्थानीयां

(कृष्णः सलज्ज नम्रीभवति ।)

**पौर्णमासी—**(पुनर्निभाल्य । सानन्द स्वगतम् ।) दिष्ट्यायं सितालिङ्गित-मङ्गीकुर्वन्दक्षिणं न्यमीलयदीक्षणम् । (प्रकाशम् ।) गोकुलानन्द, पुरस्तादियं माकन्दवेदी स्वयमलंकर्तव्या निमीलति हेलिबिम्बे सख्योरेकतरा त्वामभीष्टदेशं प्रापयति ।

**कृष्णः—**(सापत्रपम् ।) यथाह भगवती । (इति सवयस्यो निष्क्रान्तः ।)

**पौर्णमासी—**पुत्रि ललिते, कामं निर्वृतासि । तदेहि । राधामनुसरावः ।

(इत्युभे परिक्रामतः ।)

(ततः प्रविशति विशाखया सह सव्यथयन्ती राधा ।)

**राधिका—**(संस्कृतेन ।)

सखि जल्पितनारिकेलनीरं सितकर्पूरवृतं हरेर्निपीय ।
तनुसङ्गसुधां विना न तस्य ग्लपिताहं गरलेन जीवितास्मि ॥ १२ ॥

**विशाखा—**अइ अविण्णादणिअमाहाप्पे, तादिसो तुह राअस्स गरिमा जेण सो क्खु सामसुन्दरो वि बाढं रत्तीकिदो तधा वि अप्पणो मालिण्णं सङ्कसि । (क)

**राधिका—**(पुन. संस्कृतेन ।)

नालीकिनीं निशि घनोत्कलिकामशङ्कं
क्षिप्त्वा धृतीरतनुवन्यगजः क्षुणत्ति ।
अत्रानुरागिणि चिरादुदितेऽपि भानौ
हा हन्त किं सरसि सुखं भविता वराक्याः ॥ १३ ॥

**पौर्णमासी—**(पुरो राधां दृष्ट्वा ।) पुत्रि ललिते, सख्यास्तव प्रेमोर्मिमुद्रामुद्घाटयितुमुत्कण्ठितासि । तद्भवत्या तूष्णीमेव भवितव्यम् ।

---

(क) अप्यविज्ञातनिजमाहात्म्ये, तादृशस्तव रागस्य गरिमा येन स खलु श्यामसुन्दरोऽपि बाढं रक्तीकृतस्तथाप्यात्मनो मालिन्यं शङ्कसे ।

---

राधा दिनम[illegible]स्थानीयमलनं च [illegible] ॥ दक्षिणं न्यमीलयदिति । [illegible] सूचयति ॥ हेलिबिम्बे सूर्यबिम्बे ॥ [illegible] ॥ नालीकिनीमिति । [illegible] । अत्र बन्दी एव

ललिता—जं आणवेदि तत्थहोदि । (क)

पौर्णमासी—(राधामुपेत्य । सकैतवविषादम् ।)

भवदङ्गसङ्गविषये प्रियोक्तिभि-
मुहुरर्थितोऽपि मदिराक्षि माधवः ।
मनुते मनागपि न हीति हृद्व्यथा-
प्रतिकारयुक्तिरपरा विधीयताम् ॥ १४ ॥

राधिका—(सव्यामोहम् ।) अल एत्थ लज्जिदेण । (इत्यञ्जलिं बध्वा ।)

अब्भंलिहम्मि डहणे णडहं रङ्गणलदं लिहन्तम्मि ।
का पडिआरे जुत्ति मुक्किअ सामलघणुल्लासम् ॥

पौर्णमासी—

जरत्यास्त्वं नप्त्री स तु कमलया लालितपदः
कथंकार तस्मै मुहुरसुलभाय स्पृहयसि ।
प्रसीद व्याहारे मम रचय चेतो दिविचरं
गृहीतुं पाणिभ्या विधुमहह मा भूत्कुतुकिनी ॥ १५ ॥

राधिका—(सगद्गदम् । संस्कृतेन ।)

मया ते निर्बन्धान्मुरजयिनि रागो परिहृतो
मयि स्निग्धे किंतु प्रथय परमाशीस्ततिमिमाम् ।
मुखामोदोद्गारग्रहिलमतिरद्यैव हि यत
मदोपारम्भे स्यां विमलवनमालामधुकरी ॥ १६ ॥

(इति वैवश्य नाटयति ।)

---

(क) यद्विज्ञापयति तद्भवतु ।

(ख) अलमत्र लज्जितेन ।

अभ्रलिहे दहने कोमला रङ्गणलता लिहति ।
का प्रतिकारे युक्तिस्त्यक्त्वा श्यामलघनोल्लासम् ॥

---

वन्यगज । क्षुणत्ति चूर्णयति । प्रातर्यदि सा जीवेत्तदा भानु सूर्ये विकसिता तत्तु न सभवतीति भाव ॥ अभ्रलिह इति । अभ्रलिहे आकाश स्पृशति दहने । कोमला सुकुमारीं शोभनाम् । अल्पमानस्यापि मेघपर्यन्तव्यापकवह्नेरेतस्य प्रतिकार किं कलशादिभृतजलैर्भवति नान्यथेति भाव ॥ मयेति । हे मयि स्निग्धे । अद्यैव हि तत्रापि प्रदो-

**विशाखा**—भअवदि, परित्ताहि परित्ताहि। इअं उत्ताणिदणेत्ता कंपि दारुणं दसाविसेसं लहेदि राही। (क)

**पौर्णमासी**—(सावेगम्।) हा धिक्। केयं बलादाकृष्टा महाविपत्काल-सर्पी। (इति सदयं राधामालिङ्ग्य।) वत्से, समाश्वसिहि समाश्वसिहि। भावाभि-व्यक्तये प्रोत्थापितासि। तदिदं यथार्थमाकर्ण्यताम्।

अमितविभवा यस्य प्रेक्षालवाय भवादयो
　भुवनगुरवोऽप्युत्कण्ठाभिस्तपांसि वितन्वते।
अहह गहनादृष्टानां ते फलं किमभिष्टुवे
　सुतनु स तनुर्जज्ञे कृष्णस्तवेक्षणतृष्णया॥ १७॥

**ललिता**—(संस्कृतेन।)

त्वद्वार्तोत्तरगीतगुम्फितमुखो वेणुः समन्तादभू-
　त्त्वद्वेशोचितशिल्पकल्पनमयी सर्वा बभूव क्रिया।
त्वन्नामानि बभूवुरस्य सुरभीवृन्दानि वृन्दाटवी
　राधे त्वन्मयवल्लिमण्डलघना जाताद्य कंसद्विपः॥ १८॥

**राधिका**—(समाश्वस्य। स्वगतम्।) चञ्चल हे चित्त, अज्जवि ण पत्ति-आएसि। (ख)

**पौर्णमासी**—पुत्रि ललिते, वाढं प्रगल्भासि। तद्विशाखा यावन्माक-न्दमूलान्मुकुन्देन सह प्रत्यावर्तते तावदत्र संकेतिते कर्णिकारकुञ्जे गोपय त्वं गोपालिकाभ्यो राधिकाम्। मया तु सत्कृत्याय गन्तव्यम्।

(इति त्रिस्रो निष्क्रान्ताः।)

---

(क) भगवति, परित्राहि परित्राहि। इयमुत्तानितनेत्रा कमपि दारुणं दशाविशेषं लभते राधा।

(ख) चञ्चल हे चित्त, अद्यापि न प्रत्याययसि।

---

प्रारम्भ एव न तु फलविलम्बः गोष्ठे वासः। मधुरांशिष्यमाणतनुर्नाम्नेन योग्यता भवेदिति भावः॥ अधुनैव प्राणत्यागे तदाशीर्भविता मनसि कृत्वा प्रागेव रङ्गपुष्पम-म्यन्तीं राधामालिङ्ग्य गद्गदमाह—ह्यमिति॥ अमितेति। हे सुतनु, विभविभुवे

**विशाखा**—(दूरं परिक्रम्य ।) सो माकन्दो एसो पुरो दीसइ जत्थ कण्हो । (क)

(ततः प्रविशति कृष्णः ।)

**कृष्णः**—(सोत्कण्ठं प्रतीचीमवलोक्य ।)

सद्यस्तप्तहिरण्यपिण्डमधुरं चण्डत्विषो मण्डलं
सङ्गं हन्त तरङ्गिणीरतिगुरोरङ्गीचकाराम्भसि ।
द्रागेतान्यपि घूकनेत्रपटलीसिद्धाञ्जनक्षोदता
बिभ्रन्ति द्विपविभ्रमाणि रुरुधुर्ध्वान्तानि वृन्दावनम् ॥ १९ ॥

(सोत्सुक्यं पन्थानमुद्वीक्ष्य ।) कथमद्यापि सखी काचिन्नेनाध्वनि मे नावततार ।

(इति परावृत्य प्राचीं पश्यन् ।)

सान्द्राः सुप्तकुमुद्वतीकुलवधूनिद्राभिदाकोविदा.
कुर्वाणा कलुषश्रियं परिभवातङ्केन पङ्केजनीम् ।
संरम्भादभिसारिकाभिरसकृद्ध्याकुष्यमाणोद्गमा-
भास. शीतकरस्य हन्त हरितं पूर्वां परिस्कुर्वते ॥ २० ॥

(इति वैयग्र्यं नाटयति ।)

ध्यात्वा धर्मं धृतिमुदयिनीं किं बबन्धाद्य राधा
तीव्राक्षेपैः किमुत गुरुभिर्लम्भिता वा निवृत्तिम् ।
किं वा कष्टामभजत दशां तामविस्पन्दमन्दा-
मिन्दौ विन्दत्युदयमपि यन्नाजगामाद्य दूती ॥ २१ ॥

**विशाखा**—(लतान्तरे सोद्ग्रीविकम् ।) एसो णूण उक्कण्ठाए मह ज्जेव पअवीं विलोएदि कण्हो । ता क्खण परिहसिस्सम् । (ख)

**कृष्णः**—(सानन्दम् ।) इयं विशाखापि चञ्चत्पञ्चशाखा सखी मिलिता ।

---

(क) स माकन्द एष पुरो दृश्यते यत्र कृष्णः ।

(ख) एष नूनमुत्कण्ठया ममैव पदवीं विलोकयति कृष्णः । तस्मात्क्षणं परिहासं करिष्ये ।

---

स्तौमि । तनु क्षीणं ॥ **सद्य इति** । अस्तं गच्छत सूर्यबिम्बस्य रोचकत्वोपचारेण मधुरमिति पदमपन्यस्तम् । तरङ्गिणीरतिगुरो समुद्रस्य । घूकाः पेचकास्तेषां नेत्रसमूहानाम् । हस्तिनामिव विभ्रमो येषाम् ॥ **सान्द्रा इति** । हरितं दिशम् ॥ **इयमिति** ।

(इत्युपसृत्य ।) सखि, तवोपलम्भात्तामेव रम्भोरुं लब्धामवैमि यद्विशाखाराधयोरद्वैतम् ।

(विशाखा मुखमानमय्य मौनमालम्बते ।)

कृष्णः—सखि, किमत्र तूष्णीमसि ।

विशाखा—चन्दमुह, मन्दभाइणी म्हि । ता किं विण्णविस्सम् । (क)

कृष्णः—(सशङ्कम् ।) किमर्थमिदम् ।

विशाखा—सुन्दर, ण मे सरस्सइ णिस्सरदि । होदु । तधा वि संवरिदुं ण जुत्तमिदम् । (इति मुखवैकृत्यमभिनीय ।) भो भट्टिदारअ, सा पिअसही अहिमण्णुणा हदासेण महुरापत्तणम्मि—(इत्यर्धोक्ते शुष्कं रोदिति ।) (ख)

कृष्णः—(सव्यथम् ।) कदा नाम नीता ।

विशाखा—जदा भअवदी तुह्य सआसं लद्धा । (ग)

कृष्णः—(सखेदम् ।) विशाखे, कथंकारं नीता ।

विशाखा—तुअस्सि भाअं तक्किअ । (घ)

कृष्णः—कथं स तर्कितः ।

विशाखा—लोओत्तरीहोन्तो अत्थो ण कस्स तक्कणिज्जो होइ । (ङ)

कृष्णः—

ग्लपयति वपुर्दुर्लीलो मे चलन्मलयानिलो
विकिरति करैरिन्दुः क्षोदं तुषाग्निमयं रुषा ।

(क) चन्द्रमुख, मन्दभागिन्यस्मि । तस्मात्किं विज्ञापयिष्ये ।

(ख) सुन्दर, न मे सरस्वती निःसरति । भवतु । तथापि गोपायितुं न युक्तमिदम् । भो भर्तृदारक, सा प्रियसखी अभिमन्युना हताशेन मधुरापत्तने—।

(ग) यदा भगवती तव सकाशं लब्धा ।

(घ) त्वयि भावं तर्कयित्वा ।

(ङ) लोकोत्तरीभवन्नर्थो न कस्य तर्कनीयो भवति ।

पयस्वाः पयःशाखाः पर्वाणि यस्याः । 'पयःशाखः सपः पाणिः' इत्यमरः । पक्षे विगतशाखापि पयःशाखा यस्या इति विरोधः । विशाखाराधयोरद्वैतम् इति राधाविशाखेत्येकपर्यायत्वात् । 'तूष्णीं तूष्णिकः' इत्यमरः । सरस्वती वाणी । भो भर्तृदारक, भव्योक्तौ

मदनहतकस्तर्जत्येष स्फुटैरलिहुंकृतै-
स्त्रुटिरपि विना राधां नेतुं मया न हि शक्यते ॥ २२ ॥

(इति व्यामोहं नाटयति ।)

**विशाखा**—(सखेद ससंभ्रमम् ।) गोउलानन्द, समासस्स समासस्स । मए क्खु परिहसिदम् । सा तवस्सिणी तए रङ्गणमालिआए रक्खिदपराणत्थि । (क)

**कृष्णः**—(समाश्वस्य ।) धूर्ते, भद्रेण कदर्थितोऽस्मि ।

**विशाखा**—अप्पणो गुणं ण सुमरसि । (ख)

**कृष्णः**—सखि, वर्ण्यतां प्रेम्णामङ्कः प्रियायाः ।

**विशाखा**—(संस्कृतेन ।)

दूरादप्यनुषङ्गतः श्रुतिमिते त्वन्नामधेयाक्षरे
सोन्मादं मदिरेक्षणा विरुवती धत्ते मुहुर्वेपथुम् ।
आः किं वा कथनीयमन्यदसि ते दैवाद्धराम्भोधरे
दृष्टे तं परिरब्धुमुत्सुकमतिः पक्षद्वयीमिच्छति ॥ २३ ॥

**कृष्णः**—तदेहि । सत्वरमेव प्रेयसीं प्रेक्षावहि ।

(इति परिक्रामतः ।)

(ततः प्रविशति ललितयाराध्यमाना राधा ।)

**राधा**—(सखेदम् । संस्कृतेन ।)

प्रत्यूहेन पराहता नु किमभूद्गन्तुं सखी न क्षमा
तस्याः किं नु निवेदितेन हि हरिर्विश्रम्भमभ्याययौ ।
हा हन्त प्रतिकूलतां मयि गतः किंवा विधिर्दारुणो
यद्दूराद्वनमालिकापरिमलोऽप्यद्यापि नासाद्यते ॥ २४ ॥

---

(क) गोकुलानन्द, समाश्वसिहि समाश्वसिहि । मया खलु परिहसितम् । सा तपस्विनी तया रङ्गणमालिकया रक्षितप्राणास्ति ।

(ख) आत्मनो गुणं न स्मरसि ।

---

राजपुत्रो भर्तृदारकशब्देनोच्यते ॥ पूर्वं त्रिगर्धैरेभिरित्यादिना भय कीदृश कदर्थिता॰

**विशाखा**—(पुरोऽनुसृत्य । संस्कृतेन ।)

नम्रीकृत्य शिरो मुहुस्तरुवृतामालोकते वर्त्मनी-
मुत्थाय क्षणमासनात्पुनरहो भ्रान्ता निषीदत्यसौ ।
द्वित्राण्येत्य पदानि वीक्ष्य ललितां भूयः परावर्तते
पश्याग्रे तव संगमोत्सुकतया राधा परिक्राम्यति ॥ २५ ॥

**कृष्णः**—

वदनदीप्तिविधूतविधूदया
कुमुदधाममधुरामधुरस्मिता ।
नखजितोडुरियं हरिणेक्षणा
तृणयति क्षणदामुखमाधुरीम् ॥ २६ ॥

**राधिका**—(सकातर्यम् । संस्कृतेन ।)

दृग्भङ्गीनां किमु परिमलैः प्रेयसीभिर्निरुद्धः
किं वा स्वैरी मयि विहितवानुद्धतायामुपेक्षाम् ।
हा चान्द्रीभिर्द्युतिभिरभितो भ्रश्यमाणेऽपि लोके
प्राप्तो नायं यदि हलतिकामन्दिरे नन्दसूनुः ॥ २७ ॥

**कृष्णः**—(पुरोऽनुसृत्य ।) अहो, साधीयान्प्रसादः पौर्णमास्याः, यदियमामोदयति कौमुदी ।

**राधिका**—(चमत्कृतिमभिनीय । स्वगतम् ।) हुं, एत्तिअ भाअधेआणं भाअणं संवुत्तो एस जणो । (इति वैवश्यमालम्बते ।) (क)

**विशाखा**—(संस्कृतेन ।)

अहो धन्या गोप्यः फलितनवनर्मोक्तिभिरलं
विलासैरानन्दं दधति मधुरैर्या मधुभिदः ।

---

(क) अहो, एतावद्भागधेयानां भाजनं संवृत्त एष जनः ।

---

इति भावः ॥ नम्रीकृत्येति । वर्त्मनीं पन्थानम् ॥ वदनेत्यादि । वदनस्य दीप्त्या विधूतो विरस्कृतो विधूदयो यया । कुमुदधाममधुरा कुमुदकान्तीनामाश्रये मधुरं स्मितं यस्याः । नखैर्जिता उडवस्तारका यया । क्षणदामुखः प्रदोषस्तस्य माधुरीं तृणयति तृणीकरोति । तच्छोभाश्रयाणां चन्द्रकुमुदनक्षत्राणां तिरस्कारात् ॥ अहो धन्या इति ।

धिगस्तु स्वं भाग्य मम यदिह राधा प्रियसखी
　　पुरस्तस्मिन्प्राप्ते निबिडजडिमाङ्गी विलुठति ॥ २८ ॥

**ललिता**—अइ लज्जालुए राहिए, अग्गदो एसो दे माणसहंसहरो णाअरो । ता मा क्खु सज्झसेण विम्हला होहि । जं पगब्भदा जेव अज्ज कज्जसाहिणी । (क) (इति राधिकां बलादिवाकृष्य कृष्णान्तिकमासाद्य च । संस्कृतेन ।)

विदूरादालोक्य प्रबलतरतृष्णातरलित
　　सखीचेतोहंसस्तव वदनपद्मे निपतित ।
भ्रमद्भ्रूपाशाभ्यां कितव तमबध्नादिह भवा-
　　न्किमसाधु न्याय्या व्यवसितिरियं ते विसदृशी ॥ २९ ॥

**कृष्णः**—(स्मित्वा ।) ललिते, मद्विधा खलु नाबलार्थहारिणो भवन्ति ।

**विशाखा**—धम्मिअ, सच्चं सच्चम् । भद्दकालितीत्थकलम्बो ज्जेव अत्त पमाणम् । (ख)

**कृष्णः**—सखि ललिते, मद्विशुद्धौ कथं च प्रतीतिः ।

**ललिता**—छइल्लपरिक्खाविहाणेण । (ग)

**कृष्णः**—वामे, काम कथ्यतां परीक्षा । मम भ्राजिष्णुरयं कीर्तिशुभ्रांशुर्न मृषा कलङ्कीकर्तुं शक्यते ।

**ललिता**—(संस्कृतेन ।)

　त्वमुन्नद्धे राधास्तनकनककुम्भान्तरमिल-
　　त्तनूजालीकालोरगयुवतिमूर्धप्रणयिनि ।

---

(क) अयि लज्जालुके राधिके, अग्रत एष ते मानसहंसहरो नागरः । तन्मा खलु साध्वसेन विह्वला भव । यस्मात्प्रगल्भतैवाद्य कार्यसाधिनी ।

(ख) धार्मिक, सत्यं सत्यम् । भद्रकालितीर्थकदम्ब एवात्र प्रमाणम् ।

(ग) विदग्धपरीक्षाविधानेन ।

---

अहो धन्या गोप्य इत्यनेन सर्वाभ्योऽपि तस्यास्त्वयि प्रेमातिशय इति कृष्णे व्यज्यते ॥ **छइल्लेति** । छइल्ल छविल्ल । विदग्ध इत्यर्थः । **त्वमुन्नद्धे इति** । राधाया स्तनकनककु

यदि क्षोभोन्मुक्तः कलयसि करं नायकमणौ
ततस्ते ध्वस्ताङ्क' प्रचरति यशोमण्डलशशी ॥ ३० ॥

कृष्णः—(कृत्रिम त्रासमभिनीय।) हन्त निष्ठुरे, नाम्नैव ललितासि। यद' ल्पीयसि तावदर्थे गरीयसीं सर्पघटाख्या परीक्षामुपक्षिपसि।

राधिका—(सप्रणयेर्ष्यम्।) ललिदे, चिट्ठ चिट्ठ। (क) (इति सभ्रूभङ्गम वलोक्ते।)

ललिता—विसाहे,णट्ठघणुद्देसकारिणीं मं कीस तज्जति राहिआ।(ख)

विशाखा—ललिदे, इमाए हिअअट्ठिदं आउद मए जाणीअदि। (ग)

ललिता—तं कधेइ। सुणिस्सम्। (घ)

विशाखा—(सस्कृतमाश्रित्य।)

स्पृशन्त यो मेघानघमनघकर्मा तमवधी-
द्विषज्वालाजालोन्मदमदमयत्कालियमहिम्।
अकार्षीद्ध्वोपेन्द्रद्रुहमजगरं दिव्यपुरुष
भुजङ्गाचार्येऽसिन्किमिव घटते पन्नगघट ॥ ३१ ॥

ललिता—(विहस्य।) हला राधे, अप्पणो परिअररुवाए ण जाणासि माहप्प इमाए। पेक्ख। तह हि।

अवि गरुडस्स सिहामणिमुरगवहूगव्वहारिविरुदस्स।
पहवइ सहि मोहेदुं तुह णअरोमाअलीभुअगी ॥ ३२ ॥ (ङ)

---

(क) ललिते, तिष्ठ तिष्ठ।

(ख) विशाखे, नष्टघनोद्देशकारिणीं मा कस्मात्तर्जयति राधिका।

(ग) ललिते, अस्या हृत्स्थितमाकृत मया ज्ञायते।

(घ) त कथय। श्रोष्यामि।

(ङ) सखि राधे, आत्मन परिकररूपाया न जानासि माहात्म्यमेतस्या। पश्य। तथा हि।

अपि गरुडस्य शिखामणिमुरगवधूगर्वहारिविरुतस्य।
प्रभवति सखि मोहयितु तव नवरोमावलीभुजगी ॥

---

न्भयोरन्तरे मध्ये मिलन्ता या तनूजाली सैव कालोरगयुवतिस्त मूर्धप्रणयिनि नायक मणौ ॥ स्पृशन्तमिति। 'अघो दु खे व्यसनेष्वघम्' इत्यमर। अनघकर्मा अदु ख कर्मा ॥ हलेति। एतस्यास्तनूजालीभुजङ्गया ॥ अवीति। गरुडशिखामणिं गरुडवा

**राधिका**—(सप्रणयरोषम् ।) अइ धिट्ठे ललिदे, एत्थ आणविअ मं विडम्बेसि । ता गदुअ वुड्ढिआणं गोईणं विण्णविस्सम् । (क) (इति गन्तुमिच्छति ।)

**ललिता**—अइ मुद्धे, णं साहुं चोरं वा जाणिअ जाहि । (ख) (इति पटाञ्चलमाददाति ।)

**कृष्णः**—चण्डि ललिते, ययतो दुराग्रहान्न विश्रान्तासि, ततः करवाणि परीक्षाम् । (इति राधामनुसर्पति ।)

**ललिता**—(विलोक्य ।) छइल्ल, चिट्ठ चिट्ठ । विण्णादं विण्णादम् । (ग) (इति संस्कृतेन ।)

> प्रारब्धे पुरतः परीक्षणविधौ त्रासानुविद्धस्य ते
> 　खिन्नोऽयं करपल्लवस्तरलतां कम्पोद्गमैः पुष्यति ।
> रोमाञ्चं शिखिपिच्छचूडनिविडं मूर्तिश्च धत्ते ततो
> 　ज्ञातस्त्वं ननु पश्यतोहरपुरीसाम्राज्यधौरेयकः ॥ १३ ॥

**कृष्णः**—(सकुचनम्रीभूय ।) हन्त, धीगौरवं गौरीणां यदहमेव चौरीकृतोऽसि ।

**ललिता**—छइल्ल, दिट्ठिआ अप्पणो मुहेण अङ्गीकिदम् । (घ)

**कृष्णः**—सखि, सौहृदेनोपदिश्यतां मे श्रेयसः पन्था., येनाहमपराधीभवन्न व्रजामि ।

---

(क) अयि धृष्टे ललिते, अत्रानीय मा विडम्बयसि । तद्गत्वा वृद्धाना गोपीनां विज्ञापयिष्ये ।

(ख) अयि मुग्धे, एनं साधुं चौरं वा ज्ञात्वा यासि ।

(ग) विदग्ध, तिष्ठ तिष्ठ । विज्ञात विज्ञातम् ।

(घ) विदग्ध, दिष्ट्या आत्मनो मुखेनाङ्गीकृतम् ।

---

हनमपि भङ्ग्या कृष्णमिति । गरडस्य कीदृशस्य । उरगेत्यादि ॥ **प्रारब्ध इति** । तव करपल्लव कम्पोद्गमै हेतुभिस्तारल्य तरलत्व पुष्यति आधिक्येन प्रकटयति । पश्यतोहरपुरीणा साम्राज्यस्य धौरेयक आश्रय ॥ **हन्तेति** । धीगौरव धिया गौरवम् ॥ **सखीति** ।

ललिता—(संस्कृतमाश्रित्य ।)

गतानां राधायाः स्तनगिरितटे योगमभितो
विविक्ते मुक्तानां त्वमिह तरलीभूय तरसा ।
विशुद्धानां मध्ये प्रविश शरणार्थी सहृदया
भजन्ते साद्गुण्यादपि पृथुलदोषं हि पुरुषम् ॥ ३४ ॥

कृष्णः—सखि, साधूपदिष्टं त्वया। (इति सानन्दमुपसृत्य पाणौ राधां दधाति।)

राधिका—(सगद्गदम्।) सुन्दर, अजुत्तं तुज्झ एदम्। (क) (इति पाणिमाच्छिद्य शाखिना तिरोदधाति।)

कृष्णः—(राधामप्रेक्ष्य। सशङ्कम्।) हन्त। सख्यौ, क वां प्रियसखी।

उभे—मोहण, णिरूविअ भणिस्सह्म। (इति शाखिपृष्ठमासाद्य।) हला राहि, णम्मसीलं कण्हं परिहसिदुं लद्धो ओसरो। ता क्खणं सावहित्था होइ। (ख)

राधिका—(सव्याज भ्रुवौ विभुज्य।) ललिदे, परिहसिदुं ति किं भणासि। जं ईरिसं साहसं ण क्खु मादिसीए जुत्तम्। ता पत्थिदह्मि। (ग)

ललिता—(कृष्णमभ्युपेत्य।) चन्दाणण, अह्मपिअसही किं वि विण्णविदुकामावि भाएदि। (घ)

---

(क) सुन्दर, अयुक्त तवेदम्।

(ख) मोहन, निरूप्य भणिष्यावः। सखि राधे, नर्मशील कृष्ण परिहसितुं लब्धोऽवसरः। तत्क्षण सावहित्था भव।

(ग) ललिते, परिहसितुमिति किं भणसि। यदीदृश साहसं न खलु मादृश्या युक्तम्। तत्प्रस्थितास्मि।

(घ) चन्द्रानन, अस्मत्प्रियसखी किमपि विज्ञापयितुकामापि बिभेति।

---

अपराधीभवन्। पक्षे राधाया अपगतो राधोऽपराधस्तथा भवन्॥ **गतानामिति।** स्तनगिरितटे योग योगाभ्यास सयोग च। मुक्ताना प्राप्तमोक्षाणा मुक्ताना च। तरलीभूय। पक्षे तरले हारमध्यगस्तथाभूय। शरणार्थी आश्रयार्थी च। एतदेवार्थान्तरोपन्यासेनाह—सहृदया साधव। प्रकृते च हृदयेन सहवर्तमाना मुक्ता एव। साद्गुण्यादिति स्पष्टम्। प्रकृते उत्तमसूत्रप्रोतत्वात्। पृथुला पुष्टा दोषा यस्य। प्रकृते पृथुलौ दोषौ भुजौ तस्य त त्वाम्। व्यङ्ग्यार्थमप्यादाय—**साधूपदिष्टमिति**॥ शाखिना वृक्षाणाम्।

**कृष्णः**—सखि, न खल्वत्र वशवर्तिनि जने भीतिरवकाशं लभते। तन्निकाममाज्ञापयतु।

**ललिता**—(सस्कृतमाश्रित्य।)

चेतस्ताम्यति मे भयोर्मिभिरलं पाणिद्वयं कम्पते
　कण्ठः सज्जति हन्त घूर्णति शिर. स्विद्यन्ति गात्राण्यपि।
गोष्ठाखण्डलचण्डसाहसविधौ तेनास्मि नाहं क्षमा
　यद्दूरादभिसारितो निशि भवानेतन्मम क्षाम्यतु॥ ३५॥

**कृष्णः**—(स्वगतम्।) न जाने नर्मतो धर्मतो वायं गिरा गरिमा।

**राधिका**—(किंचिदाविर्भूय।) सहि, तूण्णं पत्थावेहि णम्। जाव कोवि ण पेक्खदि। (क)

**कृष्णः**—(सखेदमात्मगतम्।) चपलप्रेमाणो हि बालारमण्य। तत्किमिवासंभाव्यं नाम। (प्रकाशम्।)

त्वयाहूतः पार्श्वे प्रणयनिकुरम्बेण रभसा-
　दसिद्धार्थो राधे भवितुमिह युक्तः कथमहम्।
श्रियाकृष्टः कृष्णायसमणिरयस्कान्तशिलया
　स्फुट तामस्पृष्ट्वा भजति किमदूरे स्थगितताम्॥ ३६॥

**ललिता**—गोउलाणन्द, राहिअं कीस उवालहेसि। णं धम्महदअ चेअ उवालह, जो क्खु हदासो दोण णिब्भराणुरत्ताण अन्तरे पडिबन्धीहोदि। (ख)

---

(क) सखि, तूर्णं प्रस्थापयैनम्। यावत्कोऽपि न पश्यति।

(ख) गोकुलानन्द, राधिका कस्मादुपालम्भसे। नून धर्महतकमेवोपालभस्व, य खलु हताशो द्वयोर्निर्भरानुरक्तयोरन्तरे प्रतिबन्धीभवति।

---

**चेत इत्यादि**। सज्जति सक्ता भवति। वाङ्न निःसरतीत्यर्थ॥ **त्वयाहूत इति**। अयस्कान्तशिलया लोहकान्तमणिना करणेन श्रिया कर्त्र्या आकृष्ट कृष्णायसमणिर्लोहवर्तुलामयस्कान्तशिलामस्पृष्ट्वा किं दूरे स्थगितता भजति। अपि तु शीघ्र स्पृष्ट्वा तस्य

**कृष्णः**—पश्य पश्य ।

सखि निर्भरमनुरक्ताः प्रणयिनमनुयान्ति धर्ममपि हित्वा ।
इयमतिरागा प्राची चुम्बति विधुमिन्द्रनाथापि ॥ ३७ ॥

**ललिता**—तुम्हाणं उत्तरपउत्तरे को णाम पहवदि । ता इदो विजयेन्तु सामिपादा । (क)

**राधिका**—(साकूतमनुसृत्य ।) ललिदे, अप्पणो मुहेण किंवि विण्णविअ णं णिवट्टावइस्सम् । (ख) (इति ललितामवेक्ष्य । संस्कृतेन ।)

समन्तान्मे कीर्तिर्मुखरितसतीमण्डलमुखा
कलङ्केनोन्मुक्तं कुलमविकलश्रीरपि पतिः ।
चलच्चिल्लीलीलाजितमदनधन्वोद्धतिरयं
तदस्मिन्नारम्भे हृदयमफलं विक्लवयति ॥ ३८ ॥

**कृष्णः**—(राधा निरूप्य । सोच्छ्वासमात्मगतम् ।)

धावन्त्याः श्रुतिशष्कुलीपरिसरं सङ्गादपाङ्गश्रियो
धत्ते हीरककुण्डलं मरकतोत्तंसद्युतिं सुभ्रुवः ।
वागन्तःस्मितभाग्विभाति तदिदं शङ्के सखीशिक्षया
वैमुख्यं किल कृत्रिमं विलसति क्लान्तिं मनो मा स्म गाः ॥३९॥

---

(क) युष्माकमुत्तरप्रत्युत्तरेण को नाम प्रभवति । तस्मादितो विजयन्तां स्वामिपादाः ।

(ख) ललिते, आत्मनो मुखेन किमपि विज्ञाप्यैनं निवर्तयिष्ये ।

---

ससत्त्वमेव तिष्ठति । अहमपि तथा भवेयमिति दृष्टान्तार्थः ॥ **इन्द्रेति** । ऐश्वर्यवानपि नाथः स्वपालको यस्याः सा प्राची दिक् । **इयमिति** । तर्जन्यादिश्यमाना भवती विधुं चन्द्रं विष्णुमिव चेति । तस्मात्तथैवौचित्यमास्तामिति भावः ॥ **युष्माकमिति** । विजयन्तामितो गच्छन्तु ॥ **समन्तादिति** । चलन्त्योश्चिल्ल्योर्भ्रुवोर्लीलया जिता मदनस्य धन्वनो धनुष उद्धतिरौद्धत्यं येन तथाभूतः सन् स्वहृदयम् । अविकला श्रीर्यस्य । पक्षे अविमर्षस्तस्य कलावैदग्धी यत्र तादृशी श्रीर्यस्य ॥ **धावन्त्या इति** । अपाङ्गश्रियः श्रुतिशष्कुलीपरिसरं कर्णकुहरप्रान्तस्थानं प्रति धावन्त्याः ॥ 'निपताकरेणान्या-

ललिता—(कृष्णमुखमालोक्य । जनान्तिकम् ।) विसाहे, इङ्गिदेण लक्खेमि । उण्णीदं इमिणा अम्हाणं रहस्सम् । (क)

विशाखा—अध इम् । (ख)

कृष्णः—(सस्मितम् ।) ललिते, कृतमत्र वचनचातुरीप्रपञ्चे । नहि लतया प्रसारितास्तन्तवो गन्धसिन्धुरस्य बन्धाय प्रभवन्ति ।

विशाखा—सहि राहे, णिप्फलं विलम्बसि । झत्ति किदत्थीकुण अप्पणो पिअजणम् । (ग)

कृष्णः—(सानुरागम् ।)

कर्णद्वन्द्वमिदं रुतैरिह कुहूकण्ठस्य कुण्ठीकृतं
सद्यः कोमलभारतीपरिमलेनोल्लाघय श्लाघया ।
निःशङ्कं किल शीतलीकुरु परीरम्भेण रम्भोरु मे
गम्भीरस्मरवह्नितापलहरीपात्राणि गात्राण्यपि ॥ ४० ॥

विशाखा—सुन्दर, एसा भअवदी लज्जा जेव राहिआरूवेण उत्तिण्णा । ता जाव णं चाडुबन्धेण संमुहीकदुअ समप्पेम्ह ताव । भवन्तेण सोम्मसीअलवुत्तिणा होदव्वम् । (घ)

कृष्णः—(सादरम् ।)

अयमत्र निसर्गशीतलः सखि राधाकुचयोरवस्थितिम् ।
नवकाञ्चनकुम्भयोरहं स्फुरदिन्दीवरदामवद्भजे ॥ ४१ ॥

(इति मन्दं मन्दं राधामुपसर्पति ।)

---

(क) विशाखे, इङ्गितेन लक्ष्ये । उन्नीतमनेनास्माकं रहस्यम् ।

(ख) अथ किम् ।

(ग) सखि राधे, निष्फलं विलम्बसि । झटिति कृतार्थीकुर्वात्मनः प्रियजनम् ।

(घ) सुन्दर, एषा भगवती लज्जैव राधिकारूपेणावतीर्णा । तस्माद्यावदेनां चाटुबन्धेन संमुखीकृत्वा समर्पयामि तावत् । भवता सौम्यशीतलवृत्तिना भवितव्यम् ।

---

नयवार्यान्तरा कथा । या मिथः क्रियते द्वाभ्यां तज्जनान्तिकमुच्यते ॥' विसाहे इति । उन्नीतम् । अनुमितमित्यर्थः ॥ ललिते इति । लतया ऊर्णनाभकीटेन । गन्धसिन्धुरस्य मत्त

---

१ पिरस्य.

**राधिका**—(किंचिदपसृत्य।) सहि विसाहे, सुट्ठु भीदम्हि। ता किंति मं उवेक्खसि। (क)

**ललिता**—राहे, एसा विसाहेति विक्खादा कधं तुमं पच्छादिअ रक्खिदुं पहवदु। ता रक्खणक्खमं णं वणमालिअं ज्जेव भजेहि, जं एसा आअडिदशिलीमुहा दीसइ। (ख)

**राधिका**—(सप्रणयरोषम्।) अइ दुम्मुहि ललिदे, सिद्धा च्चेअ तुम्ह मणोरहा। तधावि ण णिवुत्तासि। (ग)

**विशाखा**—हला राहि, सव्वाणं गोउलजणाणं अभअदाणसत्ते दीक्खिदो कण्ह। ता इदो किं ति भाएसि। (घ)

**कृष्णः**—सुन्दरि राधे, त्वमेव सुष्ठु बलिष्ठासि। ततः कथं मत्तस्तव भीतिः। तथा हि।

अहीनो भ्रूगुच्छः कुटिलवलनैर्वेष्टयति मां
खरस्ते नेत्रान्तो मयि वितनुते ताडनविधिम्।
प्रलम्बः केशान्तो हरति हठवृत्त्या मम बलं
भजद्भिस्त्वामेतैरहमिह जितैरस्मि विजितः॥ ४२॥

---

(क) सखि विशाखे, सुष्ठु भीतास्मि। तस्मात्किमिति मामुपेक्षसि।

(ख) राधे, एषा विशाखेति विख्याता कथं त्वां प्रच्छाद्य रक्षितुं प्रभवतु। तद्रक्षणक्षमामेनां वनमालामेव भज, यदेषाकृष्टशिलीमुखा दृश्यते।

(ग) अयि दुर्मुखि ललिते, सिद्धा एव तव मनोरथाः। तथापि न निवृत्तासि।

(घ) हला राधे, सर्वेषां गोकुलजनानामभयदानसत्रे दीक्षितः कृष्णः। तस्मादितः किमिति भीतासि।

---

हस्तिनः॥ उत्पाघय निर्व्याधीकुरु। 'उल्लाघो निर्गतो गदात्' इत्यमरः॥ **राहे इति**। 'अलिबाणौ शिलीमुखौ' इत्यमरः। बाणयुक्तां बाणसमूहं भज इत्यर्थः। दुष्प्रवेशत्वात् स त्वां रक्षिष्यतीत्यर्थः। पक्षे भ्रमरयुक्तां कृष्णवनमालामभयदाम्॥) **हलेति**। सत्रं यज्ञम्॥ **अहीन इति**। अहीनामिनः कालियः। पक्षे पृथुलः। खरो धेनुरतीक्ष्णश्च। प्रलम्बोऽसुरः। पक्षे लम्बमानश्च। बल मम भ्रातरं सत्त्वं च। पुरा मया जितैरप्येतैः

ललिता—कण्ह, कुदो इमाए वलिट्ठत्तण ज अप्पणो धण तुअत्तो मोआविदु ण समत्था । (क)

विशाखा—(संस्कृतेन ।)

विधत्ते कंसारि' सखि परमहंसालिपु रतिं
मनोहसेन्द्र ते कथमपि न निर्मोक्ष्यति तत ।
बधानामुं सद्यस्त्वमपि भुजवल्लीविलसितै'
शठे क क्षेमार्थी सुसुखि नहि शाठ्य घटयति ॥ ४३ ॥

राधिका—(साभ्यसूयम् ।) पावे विसाहिए, तुम वि ललिदाए विसलदाए मारुदेण दूसिदासि । (ख)

कृष्णः—सखि ललिते, स्वप्रसादामृते काममदत्तावगाहनया कथमद्यापि तटस्थीकृतोऽसि राधया ।

ललिता—कण्ह, मुञ्च चादुरीवित्थारम् । ण क्खु चन्दाअली विअ झत्ति वाअमेत्तएण सुलहप्पसादा अम्हपिअसही । (ग)

कृष्णः—कथं सुलभस्ते सखीप्रसाद ।

ललिता—सेआसताणेण । (घ)

कृष्णः—(सानन्दम् । राधा पश्यन् ।)

किं चन्दनेन कुचयो रचयामि चित्र-
मुत्तसयामि कबरीं तव किं प्रसूनै ।
अङ्गानि लङ्गिमतराङ्गि करेण किं वा
संवाहयान्यतनुखेदकरम्बितानि ॥ ४४ ॥

---

(क) कृष्ण, कुत एतस्या बलिष्ठत्व यदात्मनो धन त्वत्तो मोचयितु न समर्था ।

(ख) पापे विशाखे, त्वमपि ललिताया विषलताया मारुतेन दूषितासि ।

(ग) कृष्ण, मुञ्च चातुरीविस्तारम् । न खलु चन्द्रावलिरिव झटिति वाङ्मात्रेण सुलभप्रसादास्मत्प्रियसखी ।

(घ) सेवासतानेन ।

---

शत्रुभिस्ला भगद्भिरह विचितस्तेन सतस्त्वत्तरण दुर्जयमेव ॥ विधत्त इति । परमहंसालिषु । पक्षे भक्तश्रेणिषु ॥ किमित्यादि । लङ्गिमतराङ्गि ह मनोहराङ्गि ॥ नेपथ्ये रज

राधिका—(सलीलमपक्रम्य । साङ्गुलितर्जनम् ।) पामरि, सुमरिस्ससि ओसरे । ता एसा घर गच्छन्ती जिम्हाण तुम्हाण हत्थादो अप्पाण मो आवइस्सम् । (क)

ललिता—(पटाञ्चलमाकृष्य ।) सहि राहि, याहि न घर परहत्थे पत्थिदह्मि णिअहसे । अइ बहिरे, हिरण्णं देसि । कुदो अञ्चले गण्ठिम् । (ख)

राधिका—मुञ्च मुञ्चाञ्चलम् । इदो गदुअ अज्जिअं विण्णविस्सम् । (ग)

(नेपथ्ये ।)

हन्त णत्तिणि ललिदे, कहिं दे पिअसही राहिआ । (घ)

ललिता—हन्त, एसा अज्जिआ मुहरा इध ज्जेव आअच्छदि । (ङ)

कृष्णः—(सशङ्कम् ।) ततो दवीयान्भवामि । (इति तथा स्थित ।)

(प्रविश्य ।)

मुखरा—(पुरो दृष्टिं निक्षिप्य साशङ्कमात्मगतम् ।) जो क्खु दूरदो कोवि णीलिमपुञ्जो मरगअत्थम्भं विडम्बन्तो दिट्ठिं मे आअट्टइ, णूण सो एसो कण्हो भवे । जं अउरुव्व किं पि सोरब्भं पसप्पइ । (च) (इति कृष्णान्तिकमनुसर्पति ।)

कृष्णः—आर्ये—(इत्यर्धोक्ते ।)

मुखरा—(सकपटाक्रोशम् ।) को क्खु अज्जेति खुलखुलवेदि । (छ)

---

(क) पामरि, स्मरिष्यसवसरे । तदह गृह गच्छन्ती कुटिलीना युष्माक हस्तत आत्मान मोचयिष्यामि ।

(ख) सखि राधे, याहि न गृह परहस्ते प्रस्थिते निजहसे । अयि बधिरे, हिरण्य ददासि । कथमञ्चले ग्रन्थिम् ।

(ग) मुञ्च मुञ्चाञ्चलम् । इतो गत्वार्या विज्ञापयिष्यामि ।

(घ) हन्त नप्त्रि ललिते, कुत्र तव प्रियसखी राधिका ।

(ङ) हन्त, एषा आर्या मुखरा इत एव आगच्छति ।

(च) य खलु दूरत कोऽपि नीलिमपुञ्जो मरकतस्तम्भ विडम्बयन्दृष्टि मे आकर्षति, नून स एष कृष्णो भवेत् । यदपूर्व किमपि सौरभ्य प्रसर्पति ।

(छ) क खल्वार्येति खुडखुडायते ।

---

भूमौ ॥ ततं इति । दवीयान् दूरत ॥ क खल्वित्यादि । खुडखुडायते दम्भ्र

**कृष्णः**—आर्ये मुखरे, सुखं वर्धसे ।

**मुखरा**—मोहण, जाव तुह वंसिआए मुअत्तणं ण संवुत्तं ताव कुदो अम्हाणं सुहम् । (क)

**कृष्णः**—आर्ये, किं तेऽपराध्यति वंशी ।

**मुखरा**—पुच्छ इमाओ सव्वगोउलबालिआओ जाओ कण्णसीमं पविसत्तम्मि वंसिआफुक्काराम्भे वारंवारं णिवारिज्जन्तीओ वि वणे धाअन्ति । (ख)

**कृष्णः**—(विहस्य ।) मुखरे, सत्यं यथार्थनामासि ।

**मुखरा**—मोहण, पदोसे तुज्झ एत्थ पवेसो मं सङ्काउलं करेदि ।(ग)

**कृष्णः**—मुखरे, कृतमत्र शङ्कया । यदद्य पौर्णमास्या मे वर्णितं तवात्र चत्वराङ्के चङ्क्रमीति काप्यद्भुता हरिणीति ।

**मुखरा**—णाअर, पहादे पेच्छिस्ससि । णं दाणि साहेहि । (घ)

**कृष्णः**—हन्त वृद्धे गेण्डुरविषाणकठोरे, विश्रब्धमास्यताम् । एषोऽहं व्रजामि । (इति शाखिनान्तर्दधाति ।)

**मुखरा**—ललिदे, सच्च गदो कण्हो । (ङ)

**ललिता**—अध इम् । (च)

**कृष्णः**—(स्वगतम् ।) घूर्णाकुलेयं जरती। तदत्र तूर्णीमेत्य राधापटमाकर्षयामि । (इति तथा करोति ।)

---

(क) मोहन, यावत्तव वंशिकाया मुग्धत्व(मूकत्व) न संवृत्तं तावत्कुतोऽस्माकं सुखम् ।

(ख) पृच्छ इमा सर्वगोकुलबालिका या कर्णसीमां प्रविशति वंशिकाफूत्कारारम्भे वारंवारं निवार्यमाणा अपि वने धावन्ति ।

(ग) मोहन, प्रदोषे तवात्र प्रवेशो मां शङ्काकुलां करोति ।

(घ) नागर, प्रभाते प्रेक्षिष्यसे । एनामिदानीं साधय ।

(ङ) ललिते, सत्यं गतः कृष्णः ।

(च) अथ किम् ।

---

१. मेष इत्यर्थः

**मुखरा**—(चक्षुषी विकास्य सानोशम्।) धट्ठि ललिदे, अग्गदो एसो पीदम्बरो कण्हो राहीसाडिअअञ्चलं आअड्ढन्तो विअ दीसइ। ता कीस तुमं मं पदावेसि। (क)

(कृष्णः सशङ्कं किंचिदपसर्पति।)

**ललिता**—(स्वगतम्।) रत्तिअन्धिअं णं वुड्ढिअं वञ्चेमि। (ख) (प्रकाशम्। सरम्भमभिनीय। सस्कृतेन।)

मुधा शङ्कामन्धे जरति कुरुषे यामुनतटे
तमालोऽयं चामीकरकलितमूलो निवसति।
समीरप्रेङ्खोलादतिचटुलशाखाभुजतया
वयस्याया येन स्तनवसनमस्फालितमभूत्॥ ४९॥

**मुखरा**—(स्वगतम्।) असच्चं ण कहेइ। (प्रकाशम्।) वत्से, घुम्माउलम्हि। ता घरं गदुअ सुविस्सम्। (ग) (इति निष्क्रान्ता।)

**विशाखा**—हला राहि, कण्हस्स मुहमण्डलुम्मीलिदं घम्मजलबिन्दुजालं णिअसाडिअअञ्चलेण अवणेहि। (घ)

**राधिका**—(सभ्रूभङ्गम्।) विसाहे, तुमं जेव अवणेहि, जा क्खु आकोमारं इमस्सि व्वदे गहिददिक्खासि। (ङ)

**विशाखा**—राधे, कण्ठट्ठिदा दे रङ्गणमालिआ भणादि। मा कुप्प। तुमं वि तह दिक्खाविहाणे कारिज्जन्तसंकप्पासि। (च)

---

(क) धृष्टे ललिते, अग्रत एष पीताम्बरः कृष्णो राधाशाटिकाञ्चलमाकर्षन्निव दृश्यते। तत्कथं त्वं मा प्रतारयसि।

(ख) रात्र्यन्धामेनां वृद्धां वञ्चयामि।

(ग) असत्यं न कथयति। वत्से, घूर्णाकुलास्मि। तस्माद्गृहं गत्वा स्वप्स्यामि।

(घ) हला राधे, कृष्णस्य मुखमण्डलोन्मीलितं घर्मजलबिन्दुजालं निजशाटिकाञ्चलेनापनय।

(ङ) विशाखे, त्वमेवापनय, या खल्वाकौमारमस्मिन्व्रते गृहीतदीक्षासि।

(च) राधे, कण्ठस्थिता ते रङ्गणमाला भणति। मा कुप्य। त्वमपि तत्र दीक्षाविधाने कार्यमाणसंकल्पासि।

---

त्वानुकरणम्॥ **नागर इति**। साधय याहि॥ **मुधेति**। चामीकरं सुवर्णम्। समीरप्रेङ्खोलात् समीरान्दोलनात्। येन तमालेन॥ किं भणति तत्रा—

कृष्णः—(रङ्गणमाला दृष्ट्वा सश्लाघम् ।)

शङ्के चिरात्किमपि रङ्गणपुष्पसङ्घः
पुण्यं पुरा परमतीर्थवरे व्यधत्त ।
यस्मान्ममाप्यसुलभे मदिराक्षि साक्षा-
दङ्गीचकार तव वक्षसि सङ्गसौख्यम् ॥ ४६ ॥

राधिका—हला विसाहे, जा क्खु मह कण्ठादो वलेण आअड्ढिअ णीदा तुए अणग्घा गुञ्जाअली सा दार्णीं समप्पीअदु । एसा सुक्खा अप्पणो रङ्गणमालिआ गेण्हीअदु । (क)

विशाखा—गोउलाणन्द, गुञ्जाहारकिदे मह कुप्पदि पिअसही ।(ख)

कृष्णः—राधे, संनिधेहि तव कण्ठे गुञ्जावलीमादधामि ।(इत्युपसर्पति ।)

ललिता—(सस्मितमात्मगतम् ।) गुञ्जाहारसमप्पणमिसेण राहिकञ्चु-अअञ्चलं पउसदि कण्हो । (ग)

(राधिका सभ्रूविक्षेप परावर्तते ।)

विशाखा—हला राहे, जं लद्धुं उक्कण्ठेसि तं किं क्खु लद्धासि । (घ)

राधिका—(बिम्बाधर सदश्य ।) धिट्ठे, चिट्ठ चिट्ठ । (ङ) (इति लीलारविन्देन ताडयति ।)

विशाखा—(विहस्य ।) सअमासङ्किणि, मा कुप्प । गुञ्जाहारं पुच्छेमि ।(च)

कृष्णः—

क्व तपस्तथा ममास्ते लीलाम्बुजहतिमवाप्नुया येन ।
मां चञ्चलेन ताडय लोचनकमलाञ्चलेनापि ॥ ४७ ॥

---

(क) हला विशाखे, या खलु मम कण्ठतो बलेनाकृष्य नीता त्वयानर्घा गुञ्जावली सेदानीं समर्प्यताम् । एषा शुष्का आत्मनो रङ्गणमाला गृह्यताम् ।

(ख) गोकुलानन्द, गुञ्जाहारकृते मह्य कुप्यति प्रियसखी ।

(ग) गुञ्जाहारसमर्पणमिषेण राधाकञ्चुकाञ्चलं स्पृशति कृष्ण ।

(घ) हला राधे, य लब्धुमुत्कण्ठितासि त कि खलु लब्धासि ।

(ङ) धृष्टे, तिष्ठ तिष्ठ ।

(च) स्वयमाशङ्किनि, मा कुप्य । गुञ्जाहार पृच्छामि ।

---

इति ॥ राधे इत्यादि । कार्यमाण सङ्कल्पो यस्यामिति सङ्कल्पकर्मण प्राधान्यविवक्षया तद्वाच्यप्रत्यय । न तु प्रयोज्यकर्मणि । 'ण्यन्ते कर्तुश्च कर्मण' इति चकारात्प्रधाने कर्म-

**ललिता**—

हरिणो समप्पिअ तणुं किविणासि कधं दरावलोअम्मि।
दिण्णे चिन्तारअणे ण संपुडम्मि ग्गहो जुत्तो ॥ ४८ ॥ (क)

**राधिका**—ललिदे, एव्व जप्पन्ती गुरुलोएसु मा क्खु इमं जणं अवरद्धं करेहि। (ख)

**विशाखा**—सहि, कीस सङ्कसि। ण भअवदी जेव्व एत्थ समाहाणदक्खा। (ग)

**ललिता**—(सहर्षमात्मगतम्।) दिट्ठिआ पिअसही हसिदापङ्गतरङ्गेण कण्हं आलिङ्गदि। (घ)

**विशाखा**—(संस्कृतेन।) ललिते, पश्य पश्य।

शशी व्योमोत्सङ्गं शशिनमभितः कान्तिलहरी
पुरो वृन्दारण्यं सुमुखि सहसा कान्तिलहरीम्।
हरिर्वृन्दारण्यं हरिमपि किलेयं तव सखी
सखी प्रेम्णः पूरो निजसुषमयामण्डयदयम् ॥ ४९ ॥

**ललिता**—हद्धी हद्धी। विसाहे, पेक्ख ससिकन्तमणिपसूदेहिं जलपूरेहिं सूरपूअणवेईपूरदो किदाइ विलुप्पीअन्ति अलेवणमण्डलाइ। ता एहि। ण पुप्फकेआरिअं णेम्ह। (ङ)

(इत्युभे निष्क्रान्ते।)

---

(क) हरये समर्प्य तनुं कृपणासि कथं दरावलोके।
दत्ते चिन्तारत्ने न संपुटे आग्रहो युक्तः ॥

(ख) ललिते, एवं जल्पन्ती गुरुलोकेषु मा खल्विमं जनमपराद्धं कुरु।

(ग) सखि, कथं शङ्कसे। ननु भगवत्येवात्र समाधानदक्षा।

(घ) दिष्ट्या प्रियसखी हसितापाङ्गतरङ्गेण कृष्णमालिङ्गति।

(ङ) हा धिक् हा धिक्। विशाखे, पश्य शशिकान्तमणिप्रसूतैर्जलपूरैः सूर्यपूजनवेदीपुरतः कृतानि विलुप्यन्ते आलेपनमण्डनानि। तदेहि। एतान्पुष्पकेदारिकां नयाम।

---

व्यभिधेय इत्यप्रधानानुवृत्तिव्याख्यानात् ॥ **शशीत्यादि**। शशी व्योमोत्साङ्गं निजगुणमया निजपरमशोभया अमण्डयदलंकृतवान्। तं च शशिनं कान्तिलहरी निजगुणमया

कृष्णः—प्रिये, नेदानीमपि वाम्याद्विरामस्ते । (इत्यञ्चलं गृह्णाति ।)

राधिका—मुञ्चेहि मुञ्चेहि । सहीओ मं आआरेन्ति । (क)

कृष्णः—कठोरे, मय्यत्र माङ्गीकुरु भङ्गुरताम् ।

राधिका—(सस्मितम् ।) देइ सरस्सइ, वन्दिज्जसि जं सच्चा ज्जेव पअडासि । (ख)

कृष्णः—(किंचिद्विहस्य ।)

पद्मिन्यास्ते सुमुखि परमप्रेमसौरभ्यपूरो
दूरोत्सर्पी यदवधि मुदा कृष्णभृङ्गेण भेजे ।
आक्रान्तोऽयं तव नवमुखाम्भोजमाध्वीकपान-
प्रत्याशाभिस्तदवधि रुवन्संभ्रमी बम्भ्रमीति ॥ ९० ॥

किंच ।

मुक्तानामुपलभ्यमेव कुचयोः सालोक्यमालोक्य ते
हित्वा संगमहंसमस्तसुहृदां कैवल्यमासेदिवान् ।
वैषम्यं तिलमप्यनाश्रितवतोः सान्द्रामृतस्यन्दिभि-
र्मां पूर्णं कुरु तन्वि तूर्णमनयोः सायुज्यदानोत्सवैः ॥ ९१ ॥

(राधिका लज्जते ।)

कृष्णः—प्रिये, पश्य पश्य ।

अपां पत्युः पुष्टीकरणरसपाकः कुमुदिनी-
कदम्बानामङ्गज्वरहरणशीतौषधिघटः ।
मृगाङ्कोऽयं कोकीपरिषदभिचाराध्वरधुरा-
पुरोधाः कालिन्दीपरिसरपरिष्कारमकरोत् ॥ ९२ ॥

---

(क) मुञ्च मुञ्च । सख्यौ मामाह्वयतः ।

(ख) देवि सरस्वति, वन्द्यसे यत्सत्यैव प्रकटासि ।

---

इत्यादिपूर्वपूर्वस्य कर्तुः परपरमपेक्ष्य कर्मत्वम् ॥ कृष्ण इत्यादि । कृष्णमते कठोरे इति संबोधनम् । राधिकामते कठोरे इति सप्तम्यन्तम् ॥ अपामिति । रसपाको रसायनः ।

ललिता—

हरिणो समप्पिअ तणुं किविणासि कधं दरावलोअम्मि ।
दिण्णे चिन्तारअणे ण संपुडम्मि ग्गहो जुत्तो ॥ ४८ ॥ (क)

राधिका—ललिदे, एवं जप्पन्ती गुरुलोएसु मा क्खु इमं जणं अवरद्धं करेहि । (ख)

विशाखा—सहि, कीस सङ्कसि । ण भअवदी जेव्व एत्थ समाहाणदक्खा । (ग)

ललिता—(सहर्षमात्मगतम् ।) दिट्ठिआ पिअसही हसिदापङ्गतरङ्गेण कण्हं आलिङ्गदि । (घ)

विशाखा—(संस्कृतेन ।) ललिते, पश्य पश्य ।

शशी व्योमोत्सङ्गं शशिनमभितः कान्तिलहरी
पुरो वृन्दारण्यं सुमुखि सहसा कान्तिलहरीम् ।
हरिर्वृन्दारण्य हरिमपि किलेयं तव सखी
सखीं प्रेम्णः पूरो निजमुपगयामण्डयदयम् ॥ ४९ ॥

ललिता—हद्धी हद्धी। विसाहे, पेक्ख ससिकन्तमणिप्पसूदेहिं जलपूरेहिं सूरपूअणवेईपूरदो किदाइं विलुप्पीअन्ति अलेवणमण्डलाइ । ता एहि। णं पुप्फकेआरिअ णेम्ह । (ङ)

(इत्युभे निष्क्रान्ते ।)

---

(क) हरये समर्प्य तनुं कृपणासि कथं दरावलोके ।
दत्ते चिन्तारत्ने न संपुटे आग्रहो युक्तः ॥

(ख) ललिते, एवं जल्पन्ती गुरुलोकेषु मा खल्विमं जनमपराद्धं कुरु ।

(ग) सखि, कथं शङ्कसे । ननु भगवत्येवात्र समाधानदक्षा ।

(घ) दिष्ट्या प्रियसखी हसितापाङ्गतरङ्गेण कृष्णमालिङ्गति ।

(ङ) हा धिक् हा धिक् । विशाखे, पश्य शशिकान्तमणिप्रसूतैर्जलपूरैः सूर्यपूजनवेदीपुरतः कृतानि विलुप्यन्ते अल्पनामण्डनानि । तदेहि । एतान्युपरेन्द्रारिकानयाम ।

---

व्यनिषेव इत्यग्रमनानुरागिमात्पयानात् ॥ शशीत्यादि । शशी व्योमोत्सङ्गं निजगम-मया निजसमनोभया अनन्दवृन्दारण्यमाग । त न शशिनं कान्तिलहर्या । निजपुरमया

कृष्णः—प्रिये, नेदानीमपि वाम्याद्विरामस्ते । (इत्यञ्चलं गृह्णाति ।)

राधिका—मुञ्चेहि मुञ्चेहि । सहीओ मं आआरेन्ति । (क)

कृष्णः—कठोरे, मय्यत्र माङ्गीकुरु भङ्गुरताम् ।

राधिका—(सस्मितम् ।) देइ सरस्सइ, वन्दिज्जसि जं सच्चा ज्जेव्व पअडासि । (ख)

कृष्णः—(किंचिद्विहस्य ।)

पद्मिन्यास्ते सुमुखि परमप्रेमसौरभ्यपूरो
दूरोत्सर्पी यदवधि मुदा कृष्णभृङ्गेण भेजे ।
आक्रान्तोऽयं तव नवमुखाम्भोजमाध्वीकपान-
प्रत्याशाभिस्तदवधि रुवन्संभ्रमी बम्भ्रमीति ॥ ९० ॥

किंच ।

मुक्तानामुपलभ्यमेव कुचयोः सालोक्यमालोक्य ते
हित्वा सगमहंसमस्तसुहृदा कैवल्यमासेदिवान् ।
वैषम्यं तिलमप्यनाश्रितवतो सान्द्रामृतस्यन्दिभि-
र्मां पूर्णं कुरु तन्वि तूर्णमनयोः सायुज्यदानोत्सवे ॥ ९१ ॥

(राधिका लज्जते ।)

कृष्णः—प्रिये, पश्य पश्य ।

अपां पत्युः पुष्टीकरणरसपाकः कुमुदिनी-
कदम्बानामङ्गज्वरहरणशीतौषधिघटः ।
मृगाङ्कोऽयं कोकीपरिषदभिचाराध्वरधुरा-
पुरोधाः कालिन्दीपरिसरपरिष्कारमकरोत् ॥ ९२ ॥

---

(क) मुञ्च मुञ्च । सख्यौ मामाह्वयत ।

(ख) देवि सरस्वति, वन्द्यसे यत्सत्यैव प्रकटासि ।

---

इत्यादिपूर्वपूर्वस्य कर्तुं परपरमपेक्ष्य कर्मत्वम् ॥ कृष्ण इत्यादि । कृष्णमते कठोरे इति सबोधनम् । राधिकामते कठोरे इति सप्तम्यन्तम् ॥ अपामिति । रसपाको रसायन ।

तदेतां वासन्तिककान्तिमण्डलमण्डितमण्डलस्य चन्द्रमसश्चन्द्रिकाचञ्चुम्बितां विचरावो निकुञ्जचन्द्रशालिकाम् । (इति निष्क्रान्तौ ।)

(इति निष्क्रान्ताः सर्वे ।)

इति राधासङ्गो नाम तृतीयोऽङ्कः ।

---

चतुर्थोऽङ्कः ।

(ततः प्रविशति नान्दीमुखी ।)

**नान्दीमुखी**—भणिदह्मि ललिदाए—'हला णान्दीमुहि, गोमण्डले गोट्ठं पइट्ठे एण्हि कण्हो तुवरन्तो गोअड्ढणाहिमुहं पत्थिदो। ता तुमं तत्थ गदुअ सुअलं विण्णवेहि, जधा एसो ओसरे णिअवअस्सस्स राहिआं सुमरावेदि' त्ति । (परिक्रम्य ।) कधं एत्थ पउमा आअच्छइ । (क)

(प्रविश्य ।)

**पद्मा**—हला णान्दीमुहि, कामं कुसलासि । ता कंपि उवाअं कधेहि जेण उव्विग्गं चन्दाअलीं आसासेमि । (ख)

**नान्दीमुखी**—किं से उव्वेअकारणम् । (ग)

---

(क) भणितास्मि ललितया—'सखि नान्दीमुखि, गोमण्डले गोष्ठं प्रविशति सति कृष्णस्त्वरमाणो गोवर्धनाभिमुखं प्रस्थितः । तत्त्वं तत्र गत्वा सुबलं विज्ञापय, यथैषोऽवसरे निजवयस्यस्य राधिकां स्मारयति' इति । कथमत्र पद्मा आगच्छति ।

(ख) सखि नान्दीमुखि, कामं कुशलासि । तत्कमप्युपायं कथय येनोद्विग्नां चन्द्रावलीमाश्वासयामि ।

(ग) किमस्या उद्वेगकारणम् ।

---

कोर्कीति । चन्द्रमसीव्रमृदुस्य मारवयस्य भारतोदयः पुरोपाः पुरोहितः । चन्द्रिकाचुम्बितां ज्योत्स्नासम्पृक्ताम् । विचरावः गच्छावः ॥ इति तृतीयोऽङ्कः ॥

अथ श्री स्वाशयविशेषभेदाद्येव रसप्रदर्शिन्युज्ज्वलनीला मयस्थगनतो पूर्वरागसंभोगादिनिर्दिश्य इदानीं विप्रलम्भभेदमधिकृत्येन रसविलासं प्रादुर्भावयन् ... नन्दन(?)नीला पर्वणि—ततः प्रविशतीत्यादिना ॥ सांप्रतमित्यादि । ... दर्शने ... [illegible]

पद्मा—हला, जाणासि ज्जेव्व तुमं जधा पदोसे सव्वं क्खु गोउलं विब्भमेण कण्हो पच्चहं रञ्जेदि । (क)

नान्दीमुखी—अध इम् । (ख)

पद्मा—संपदं दाव एत्थ दक्खिणे गोट्ठद्धे इमस्स गन्धो वि दुल्लहो । (ग)

नान्दीमुखी—हला, मा दूणेहि । (घ) (संस्कृतेन ।)

दृष्टं बिम्बितधातुचित्ररचनं शैब्याललाटं मया
श्यामाकुन्तलचामरं च विलुठद्वन्यस्रजोड्डामरम् ।
गुञ्जाहारलतार्धमञ्जुरधुना भद्राभुजान्तस्तथा
तथ्यं विद्धि स नागरीगुरुरभूद्गोवर्धनस्यातिथिः ॥ १ ॥

(नेपथ्ये ।)

कृत्वा वंशीमखिलजगतीगीतसंगीतभङ्गी-
साङ्गीभावप्रथमवसतिं सङ्गिनीं वामपाणौ ।

---

(क) हला, जानास्येव त्वं यथा प्रदोषे सर्वं खलु गोकुलं विभ्रमेण कृष्णः प्रत्यह रञ्जयति ।

(ख) अथ किम् ।

(ग) सांप्रतं तावदत्र दक्षिणे गोष्ठार्धेऽस्य गन्धोऽपि दुर्लभः ।

(घ) हला, मा दूना भव ।

---

कुञ्जादौ यमुनातटवर्तिन्येकस्या राधायामेवाधिकमनुरज्यान्याः काश्चिदप्यय नानुसंधत्ते इत्यभिव्यज्यते । त्वया तत्तु कथ सभवति यतः—**दृष्टं बिम्बितेत्यादि** । बिम्बिता संलग्ना कृष्णसंबन्धिनी धातुचित्ररचना यत्र तथाभूत ललाट विलुठन्त्या अर्थात्कृष्णस्य वन्यस्रजात् । उड्डामरमुत्कृष्टम् । भुजान्त स्कन्धदेशः । गाढालिङ्गनादङ्कितेन गुञ्जाहारलतया अर्धे मञ्जुः मनोहरः । गोवर्धनस्यातिथिस्तेन दक्षिणगोष्ठार्धसमीपवर्तिनि गोवर्धनतटादौ बकुलकुञ्जादिष्वपि तस्या अद्य गमन सभवतीति यस्मादेताश्चन्द्रावलीशैब्याद्या अपि कृष्णेन सभुक्ता दृष्टास्ततः किमित्यस्या राधायामेवाशक्तोयोऽय न तु चन्द्रावल्यामिति व्यञ्जयसीत्यर्थ. । तत्र शैब्यायाः स्वपक्षत्वाच्छ्यामायास्तटस्थत्वाद्भद्रायाश्च सुहृत्पक्षत्वादेतासु स्पर्धाभावाच्चन्द्रावल्या न विरोध. । अत एव राधाविशाखाललिताना तिसृणामनुक्ति···-···ति पक्षत्वात् ॥ **कृत्वा वंशीमिति** । नेपथ्ये वृन्दाया उक्तिः । वामपार्श्वे सङ्गिनीं वशीम् । अखिलजगतीषु गीताया सगीतभङ्गी तस्या यः साङ्गीभावस्तस्य प्रथमा वसतिर्य-

एष प्रेम्णा व्रजति नयनानन्दनो नन्दसूनु-
मैन्दं गोवर्धनशिखरिणः कन्दरामन्दिराय ॥ २ ॥

**नान्दीमुखी**—पउमे, तुमं इमिणा वुत्तन्तेण चन्दाअलिअं सुहावेहि। अहं सुअलं अणुसरिस्सम्। (क) (इति निष्क्रान्ता।)

**पद्मा**—(पुरः पश्यन्ती।) एसा करालाए अज्जिआए चित्तं अनुवट्टन्ती वणदेअदा वुन्दा चन्दाअलिअं सच्छलं णिवारेदि। (ख)

(नेपथ्ये।)

किं राधेव दुरन्तमिच्छसि बलादुन्मादमालम्बितुं
मुग्धे मा नय मानि(न)नीयजरतीवाक्यं बहिर्मा व्रज।
एष स्मेरविलोचनाञ्चलरुचा चापल्यमुल्लासय-
न्नायाति व्रजसुन्दरीगणमनोमाणिक्यहारी हरिः ॥ ३ ॥

(प्रविश्य।)

**चन्द्रावली**—(सौत्सुक्यं समन्तादवलोक्य।) कधं वुन्दाए अलीअं व्व वाहरीअदि। कुदो एत्थ कण्हो। (ग) (इति खेदं नाटयति।)

**पद्मा**—(उपसृत्य। संस्कृतेन।)

न संतापं स्वान्ताद्व्ययसि कथं दावविषमं
घनश्वासैः किं वा मलिनयसि बिम्बाधरमपि।
वनान्तान्केकाभिः सखि शिखरिकक्षे मुखरय-
न्सखीस्थल्याः कल्याण्यभजदुपशैल्यं यदुपतिः ॥ ४ ॥

---

(क) पद्मे, त्वमनेन वृत्तान्तेन चन्द्रावलीं सुखय। अहं सुबलमनुसरिष्यामि।

(ख) एषा करालाया आर्याया चित्तमनुवर्तमाना वनदेवता वृन्दा चन्द्रावलीं सच्छलं निवारयते।

(ग) कथं वृन्दयालीकमिव व्याह्रियते। कुतोऽत्र कृष्णः।

---

स्याम्। तेनान्यत्र प्रायो गीतमङ्गहीनमिति ॥ एषेति। कराला चन्द्रावलीमातामही ॥ **किं राधेवेति**। स्पष्टम्। पक्षे मुग्धे व्यङ्ग्यमर्थं किंचिदवगच्छन्तीति संबोधनव्यङ्ग्यम्। मानि(न)नीयजरतीवाक्यं मा नय मा गृहाण। किं वाक्यं तदा राधेव दुरन्तमुन्मादमवलम्बितुं किमिच्छसि तस्माद्धे मुग्धे मूढे बहिर्मा व्रज इत्येवम् ॥ **न संतापमिति**।

**चन्द्रावली**—(विलोक्य ।) कधं पिअसही पउमा । (इति गाढमालिङ्गय ।) अवि णाम अक्खलिदं भणिदा । (क)

**पद्मा**—अध इम् । (ख)

(ततः प्रविशति सुवलेनानुगम्यमानः कृष्णः ।)

**कृष्णः**—पश्य पश्य ।

अकलिततापस्तरणेरस्तशिरोवीथिभिस्तिरोधानात् ।
अस्फुटतिमिरविजृम्भः प्रथयति तोषं निशारम्भः ॥ ५ ॥

**सुवलः**—वअस्स, अज्ज गोदोहण वि अणवेक्खिअ सलालसो वि किंति एत्थ लद्धो सि । (ग)

**कृष्णः**—सखे, मयूरं वर्णयता केनचित्प्रिया चन्द्रावली स्मारितोऽस्मि । तद्विलोकनाय लालसेयम् ।

**सुवलः**—केरिसं मोरवण्णणम् । (घ)

**कृष्णः**—

उन्मदेन पुरतः शिखण्डिना ताण्डवे पृथुनि मण्डलीकृताम् ।
पश्य निन्दितमहेन्द्रकार्मुका कृष्णचन्द्रचलचन्द्रकावलीम् ॥ ६ ॥

**सुवलः**—तदो आअड्ढणं वंशीकलं उल्लासेहि । (ङ)

(कृष्ण वक्त्रे वेणु विन्यस्यति ।)

**चन्द्रावली**—(निशम्य । सघूर्णम् ।) सव्वदा सुव्वन्तीवि अस्सुदअरी विअ विम्हावेदि दुम्मुही मुरली । (च)

---

(क) कथ प्रियसखी पद्मा । अपि नामास्खलित भणिता ।

(ख) अथ किम् ।

(ग) वयस्य, अद्य गोदोहनमप्यनपेक्ष्य सलालसोऽपि किमित्यत्र लब्धोऽसि ।

(घ) कीदृश मयूरवर्णनम् ।

(ङ) तदाकर्षण वशीकलमुल्लासय ।

(च) सर्वदा श्रूयमाणाप्यश्रुतचरीव विस्मापयति दुर्मुखी मुरली ।

---

सखीस्थली चन्द्रावलीग्राम सखिघरा इति ख्यातलस्या उपशैल्य समीपम् । अभजत् प्रासवान् ॥ **अकलितेति** । तरणे सूर्यस्य ॥ **उन्मदेनेति** । चलचन्द्रकावलीं चलाना

कृष्णः—सखे सुबल, अद्य चन्द्रावलीप्रसादे त्वया ममानुकूलेन भवितव्यम्।

सुबलः—अध इम्। (क)

पद्मा—हला, पेक्ख। एसो वेणुसण्णाए तुमं तुरवावेदि गोउलेन्दणन्दणो। (ख)

चन्द्रावली—(विलोक्य। संस्कृतेन।)

सखि मुरलि विशालच्छिद्रजालेन पूर्णा
लघुरतिकठिना त्वं ग्रन्थिला नीरसासि।
तदपि भजसि शश्वच्चुम्बनानन्दसान्द्रं
हरिकरपरिरम्भं केन पुण्योदयेन॥ ७॥

कृष्णः—(पुरो दृष्ट्वा। सानन्दम्।) सखे, सेयं मम लोचनेन्दीवरचन्द्रिका चन्द्रावली। (इति सादरमुपेत्य।) प्रिये,

चन्द्रस्तव मुखबिम्बं चन्द्रा नखराणि कुण्डले चन्द्रौ।
नवचन्द्रस्तु ललाटं सत्यं चन्द्रावली त्वमसि॥ ८॥

(चन्द्रावली लज्जते।)

कृष्णः—प्रिये, दुष्टदानवदमनाभिनिवेशात्त्वन्मुखचन्द्रमप्रेक्षमाणस्य यातयामा भवन्त्योऽपि न यातयामा भवन्ति ममामूर्यामिन्य.।

चन्द्रावली—सुन्दर, भमरस्स विअ णवणवाणुसारिणी दे पइदी कधं चिरासङ्गणीरसासु पउमिणीसु अहिरमदु। (ग)

कृष्णः—प्रिये चन्द्रावलि, प्रतिपदालोके त्वं सर्वेषां नवनवासि। तदद्य निर्वापय विरहोत्तापं परिष्वङ्गरसेन।

(क) अथ किम्।

(ख) हला, पश्य। एष वेणुसंज्ञया त्वां त्वरयति गोकुलेन्द्रनन्दनः।

(ग) सुन्दर, भ्रमरस्येव नवनवानुसारिणी ते प्रकृतिः कथं चिरासङ्गनीरसासु पद्मिनीष्वभिरमताम्।

चन्द्रनामावलीं पङ्क्तिम्॥ सखीति। लघुर्लाघववती॥ प्रिये इत्यादि। यातो यामो यासां ता यातयामास्तथाभवन्त्योऽपि न तथा भवन्ति। गच्छन्त्यो या यामिन्यो .... गच्छन्तीत्यर्थः॥ प्रतिपदालोके इति। प्रतिपदि तिथ्यालोके प्रतिक्षणालोके च॥

**पद्मा**—पिअसहीविरहेण कुदो तुम्ह तावुप्पत्ती। (क)

**सुबलः**—अइ, मा क्खु एव्व भण । एसो चन्दाअलीविरहेण संतत्तो सीअलाए जलधाराए कच्छे देहं णिक्खिविअ सतिण्णो चऊरो विअ णं ज्जेव्व चन्दाअलिअं सव्वदो पेच्छइ वअस्सो । (ख)

**कृष्णः**—प्रिये, श्रूयताम् ।

विपिनान्तरे मिलन्ती मधुररसा शीतलस्पर्शा ।
अमृतमयी त्वद्विरहे समजनि मम तापनुत्तये राधा ॥ ९ ॥

(इति ससंभ्रमम् ।) धारा धारा ।

**चन्द्रावली**—(साभ्यसूयम् ।) गच्छ । राहं ज्जेव सेवेहि । (ग)

**कृष्णः**—प्रिये, धारेत्यवदम् ।

**चन्द्रावली**—जाद कधं दोण वण्णाण विवरीदत्तणम् । (घ)

**कृष्णः**—प्रिये, द्वयोर्वर्णयो कर्णयोर्वा विपरीतत्वमित्यस्मिन्नस्ति विचारः ।

**चन्द्रावली**—(रोपारुण मुखमानमय्य ।) अइ दानसौण्ड, अल एदाए अवहित्थाए । अज्ज अप्पणो मणहारिणो सुवण्णजुअलस्स विण्णासादो साहु माहुरीपूरिदकण्णम्हि किदा । (ङ)

---

(क) प्रियसखीविरहेण कुतस्तव तापोत्पत्ति ।

(ख) अयि, मा खल्वेव भण । एप चन्द्रावलीविरहेण सतप्त शीतलाया जलधाराया कच्छे(क्षे) देह निक्षिप्य सतृष्णश्चकोर इवैतामेव चन्द्रावलीं सर्वत पश्यति वयस्य ।

(ग) गच्छ । राधामेव सेवस्व ।

(घ) जात कथ द्वयोर्वर्णयोर्विपरीतत्वम् ।

(ङ) अयि दानशौण्ड, अलमेतयावहित्थया । अद्यात्मनो मनोहारिण सुवर्ण युगलस्य विन्यासात्साधु माधुरीपूरितकर्णास्मि कृता ।

---

**विपिनेति** । पक्षे मधुर शृङ्गार । अन्यत्स्पष्टम् ॥ **अस्ति विचार इति** । वर्णयोर्वैपरीत्येन त्वया राधेति श्रुतमित्यर्थ ॥ **अयीति** । दानशौण्डो दानवीर । अवहित्था अङ्गगुप्ति । सुवर्णयुगलस्य सुवर्णमयकुण्डलयुगलस्य राधेति सुष्ठुवर्ण

कृष्णः—

यथार्थेयं वाणी तव चकितसारङ्गनयने
सुवर्णालंकारो मधुरयति यत्ते श्रुतियुगम्।
मुखेन्दोरन्तस्ते बहिरपि सुवर्णच्युतिरियं
मम श्रोत्रद्वन्द्वं नयनयुगलं चाकुलयति॥ १०॥

पद्मा—हला, अप्पणो अदिट्ठं सुमरन्ती मा खिज्जेहि। जुत्ता राहाणुरत्तस्स इमस्स राहाणाममयी संकधा। (क)

चन्द्रावली—(निश्वस्य।) सहि पउमे, एवं णेदम्। (ख)

कृष्णः—प्रिये, बाढमनाशङ्कनीयमेवेदम्। यतः।

तस्य षोडशकलस्य षोडशी वल्लभा स्फुरति या नभस्तले।
राधया सुवदने कथं तया संगतिर्भुवि ममाद्य संभवेत्॥ ११॥

पद्मा—चउसट्ठिकलासालिणो दे ण क्खु सावि सोलहकलस्स वल्लहा दुल्लहा। (ग)

कृष्णः—(सप्रश्रयं पद्मामवलोक्य।)

चन्द्रावलीवदनपुष्करसङ्गिगण्ड-
चन्द्रावलीकतरतर्ककलङ्किताङ्गौ।

---

(क) हला, आत्मनोऽदृष्टं स्मरन्ती मा खिद्यस्व। युक्ता राधानुरक्तस्यास्य राधानाममयी संकथा।

(ख) सखि पद्मे, एवमेतत्।

(ग) चतुःषष्टिकलाशालिनस्ते न खलु सापि षोडशकलस्य वल्लभा दुर्लभा।

---

युगलस्य चात्मनो मनोहरस्य। माधुरीपूरितेति विरुद्धलक्षणा॥ यथार्थेयमिति। हे चकितसारङ्गनयने हे भीतमृगनयने, सुवर्णालंकारस्तव श्रुतियुगले तिष्ठत्येव। सुवर्णच्युतिस्तु मामाकुलयति। सा तु मुखेन्दोरन्तर्मध्यान्मम श्रुतियुगलम्। अत्र सुवर्णशब्दः सोष्ठुण्टाक्षरवाची तस्य च्युतिः क्षरणं मुखेन्दोर्बहिश्च गण्डदेशादौ वर्णच्युतिः क्रोधवशात्पीतवर्णस्य च्युतिर्नाशस्तथा च गण्डस्थितं रक्तवर्णं मम नयनयुगलमाकुलयति॥ हलेति। सख्याः सजल्पः॥ तस्येति। षोडशकलस्य षोडशी राधा। आराशास्यया तया सह संगतिर्भुवि स्थितस्य मम कथं संभवेदित्यादिना रेवंरा मया ज्ञायतेऽन्या का वा भवतीति भावः॥ सप्रश्रयं सविनयम्॥ चन्द्रावलीत्यादि। चन्द्रावलीवद-

शङ्काकुलोऽत्र कलयन्कमलायताक्षि
शं काकुलोलहृदयः प्रविशामि नाहम् ॥ १२ ॥

चन्द्रावली—(सव्याजप्रसादम् ।) देअ, णं क्खु गोउलजणजीअणभूदस्स दे सव्वसुहकारिदागुणं का क्खु हदवुद्धिआ ण सहदि । ता णिप्फलेण संकोएण मा सादङ्को होहि । (क)

कृष्णः—(स्वगतम् ।) गरिष्ठामपि मन्युमुद्रां धीरेयं मुग्धमाधुर्येण निह्नुते । (प्रकाशम् ।) प्रिये, कृतमनेन गौरवविशेषोद्धारेण । रोषोक्तिमाध्वीकमेव वरं वरिष्ठम् ।

चन्द्रावली—गोउलाणन्द, तुम्ह पुरदो मुहं दंसेदुं ण पहवामि । जं पगब्भ वाहरन्ती अवरद्धम्हि ता घरं गमिस्सम् । (ख)

कृष्णः—(सानुनयम् ।) प्रिये, प्रसीद प्रसीद । बद्धोऽयमञ्जलिः ।

चन्द्रावली—सुहअ, उज्जुअं विवाहरन्तीं कीस मा अलिअं संकसि । ता अणुजाणेहि मं भद्दअलीदंसणस्स । (ग) (इति पद्मया सह निष्क्रान्ता ।)

कृष्णः—सखे, महानुभावामेतां मच्चित्तमहाकाशचन्द्रावलीमपि बलीयस्तम.कन्दलीभिरवस्कन्दितामालोक्य निरालोकोऽस्मि ।

सुबलः—पिअवअस्स, किंति एव्व भणासि । सा क्खु अदक्खिणा ण दिट्ठा । (घ)

(क) देव, ननु खलु गोकुलजनजीवनभूतस्य तव सर्वशुभकारितागुणं का खलु हतबुद्धिर्न सहते । तस्मान्निष्फलेन सकोचेन मा सातङ्को भव ।

(ख) गोकुलानन्द, तव पुरतो मुखं दर्शयितुं न प्रभवामि । यत्प्रगल्भं व्याहरन्त्यपराद्धास्मि तस्माद्गृहं गमिष्यामि ।

(ग) सुभग, ऋजु व्याहरन्तीं किं मामलीकं शङ्कसे । तदनुज्ञापय मां भद्रकाली दर्शनार्थम् ।

(घ) प्रियवयस्य, किमित्येव भणसि । सा खल्वदक्षिणा न दृष्टा ।

नमेव पुष्करमाकाश तत्सङ्गिनौ गण्डचन्द्रौ । कलयन् पश्यन् सन् । शं कल्याणम् । न प्रविशामि नोपलभे । कीदृशौ । अलीकतरतर्केण कलङ्कितमङ्ग ययो । अह कीदृश । अत्र शङ्काकुल । पुन कीदृश । काका दैन्येन लोल हृदय यस्य ॥ मच्चित्तेति । मच्चित्तरूपाकाशे चन्द्रावलीस्वरूपामिव चन्द्रावलीम् । मानरूपतम कन्दलीभी राहुसमूहै । अवस्कन्दितामाक्र

कृष्णः—सखे, बाढं दुरूहा महीयसां प्रकृतिः। तथेदानीम्

न्यविशत नयनान्ते कापि सारल्यनिष्ठा
वचसि च विनयेन स्तोत्रभङ्गी न्यवात्सीत्।
अजनि च मयि भूयान्संभ्रमस्तेन तस्या
व्यवृणुत हृदि मन्युं सुष्ठु दाक्षिण्यमेव॥ १३॥

तदेहि मनोहारिणि, तस्मिन्केशरकुञ्जे निविश्य चन्द्रावलीसंगमोपायमङ्गीकरोमि। (इति परिक्रम्य।) सखे, सेयं बकुलावलिमञ्जुला निकुञ्जवीथी। पश्य पश्य।

स्फुरति सरो दक्षिणतः सव्ये वापी समन्ततः कुल्याः।
इति केशराटवीयं प्रमदं नीराधिका कुरुते॥ १४॥

सुबलः—(स्वगतम्।) लद्धो मए ओसरो। (प्रकाशम्।) वअस्स, सराहिआ जेव्व तुह पमदं कुरइ किंति णीराहिआ त्ति भणासि। (क)

कृष्णः—(सुबलमालिङ्ग्य।) सखे, सत्यं ब्रवीषि। तदद्य राधिका यथेमां केशरनिकुञ्जलक्ष्मीमलंकरोति तथा मद्दिरा संदिश्यतां ललिता।

सुबलः—तह त्ति। (ख) (इति निष्क्रान्तः।)

(ततः प्रविशति पद्मा मधुमङ्गलश्च।)

मधुमङ्गलः—पउमे, सुदं मए अज्ज वअस्सेण चाडुआरिणा अणुणीदा वि चन्दाअली ण पसण्णा। (ग)

पद्मा—अध इं। (घ)

---

(क) लब्धो मयावसरः। वयस्य, सराधिकैव तव प्रमदं करोति। किमिति नीराधिकेति भणसि।

(ख) तथेति।

(ग) पद्मे, श्रुतं मयाद्य वयस्येन चाटुकारिणा अनुनीतापि चन्द्रावली न प्रसन्ना।

(घ) अथ किम्।

---

ताम्॥ स्फुरतीति। केशरस्य बकुलवृक्षस्याटवी। कीदृशी। नीराधिका नीरेणाधिका। 'कुल्याल्पा कृत्रिमा नदी' इत्यमरः॥ प्रमदमानन्दम्॥ लद्धो इति। शब्दार्थसान्य-

**मधुमङ्गलः**—णूणं वअस्सो वि विसण्ण वट्टइ । ता जुत्ता दोणं संगमे अम्हाणं सहअरिदा । (क)

**पद्मा**—अज्ज, अदो ज्जेव्व मए अणुसरिदो सि । (ख)

**मधुमङ्गलः**—(पुरो दृष्ट्वा ।) पउमे, पेक्ख एसो पिअवअस्सो छप्पदमेत्तसहाओ केसरकुण्डगे किं पि मन्तेदि । (ग)

**पद्मा**—अज्ज, लदाजालेहि अन्तरिदा भविअ सुणह्म कि एसो भणदित्ति । (घ)

(इति तथा स्थितौ ।)

**कृष्णः**—(राधा स्मरन् । सोत्कण्ठम् ।)

प्रसरति यद्भ्रूचापे श्लथज्यमकरोत्स्मरो धनु पौष्पम् ।
मधुरिममणिमञ्जूषा भूयायै मे प्रिया सास्तु ॥ १९ ॥

**मधुमङ्गलः**—पउमे, एसो उक्कण्ठाए तुज्झ पिअसहीं च्चेअ वण्णेदि । ता एहि । तुरिअ गदुअ णं समाणेह्म । (ङ)

**पद्मा**—अज्ज, सुट्ठु णिट्ठङ्किदं सुणह्म जं बहुवल्लहो एसो । (च)

**कृष्णः**—(पुन सौत्सुक्यम् ।)

सा मुखसुषमा निर्जितराकाचन्द्रा वलीलसन्मध्या ।
(इत्यर्धोक्ते ।)

---

(क) नून वयस्योऽपि विषण्णो वर्तते । तद्युक्ता द्वयो सगम आवयो सहकारिता ।

(ख) आर्य, अत एव त्व मयानुसृतोऽसि ।

(ग) पद्मे, पश्यैष प्रियवयस्य षट्पदमात्रसहाय केसरकुञ्जे किमपि मन्त्रयते ।

(घ) आर्य, लताजालैरन्तरितो भूत्वा शृण्व किमसौ भणतीति ।

(ङ) पद्मे, एष उत्कण्ठया तव प्रियसखीमेव वर्णयति । तदेहि । त्वरित गत्वैना समानयाव ।

(च) आर्य, सुष्ठु निष्टङ्कित शृणुव यद्बहुवल्लभ एष ।

---

थापरिकल्पनेन राधिकामिदानीं स्मारयामाति भाव ॥ **प्रसरतीति** । यस्या भ्रूचापे प्रसरति सति कन्दर्प पौष्प धनु श्लथज्यमकरोत् । श्लथा ज्या यस्र तथाभूतम् । एतद्भ्रुवोरग्रे मम सज्जेन धनुषा कि कार्यमित्यर्थ । माधुर्यरूपमणीना मञ्जूषा पेटिका । सा प्रिया राधिकेति कृष्णहृदयम्, चन्द्रावलीति पद्मामधुमङ्गलयो ॥ **सेति** । सा मुखस्य सुषमा परमा शोभा निर्जितराकाचन्द्रा नि शेषेण जितो राकाया पौर्णमास्याश्चन्द्रो यया ।

**मधुमङ्गलः**—पउमे, अलं इदं इमादो परेण सुदेण तूण्णं गच्छह्म।(क)

**पद्मा**—जुत्तं कधेसि। (ख)

(इत्युभौ जवेन दूरं परिक्रामतः।)

**कृष्णः**—

मुहुराधास्यति राधा मदुरसि रसिका किमात्मानम्॥ १६॥

**पद्मा**—अज्ज, एव्वं भणामि। माणिणीए पिअसहीए सअं समाअमेण लाहवं होदि। ता परावट्टिअ कण्हं विण्णवेहि। (ग)

**मधुमङ्गलः**—सोहणं मन्तेसि। (इति कृष्णान्तिकमासाद्य।) पिअवअस्स, पच्छण्णेण भविअ सव्वं दे आअण्णिदं मए उक्कण्ठावअणं। ता आणवेहि तं ज्जेव्व तुज्झ वल्लहं तुरिअं समाणेमि। (घ)

**कृष्णः**—(सश्लाघमालिङ्ग्य।) सखे, मदनुग्रहेण शीघ्रमानय।

(मधुमङ्गलः परिक्रम्य पद्मया सह निष्क्रान्तः।)

**कृष्णः**—अहो परमोत्कण्ठानां प्रेम्णामुत्कण्ठाकारित्वम्।

भ्रमरेऽपि गुञ्जति निकुञ्जकोटरे
मनुते मनस्तु मणिनूपुरध्वनिम्।
अनिलेन चञ्चति तृणाञ्चलेऽपि तां
पुरतः प्रियामुपगतां विशङ्कते॥ १७॥

---

(क) पद्मे, अलमिदमितः परेण श्रुतेन तूर्णं गच्छावः।

(ख) युक्तं कथयसि।

(ग) आर्य, एवं भणामि। मानिन्याः प्रियसख्याः स्वयं समागमेन लाघवं भवति। तत्परावृत्य कृष्णं विज्ञापय।

(घ) शोभनं मन्त्रयसि। प्रियवयस्य, प्रच्छन्नेन भूत्वा सर्वं ते आकर्णितं मयोत्कण्ठावचनम्। तदाज्ञापय तामेव तव वल्लभां त्वरितं समानयामि।

---

वलीभिर्लसन्मध्य यस्याः। राधिकामधिकृत्य कृष्णस्य वर्णनमिदम्। एताभ्यामन्यथा ज्ञातम्। सा चन्द्रावली कीदृशी। मुखसुषमानिर्जितराका। चन्द्रावलीति नाम गृहीत्वा वर्णयति। कोऽत्र संदेह इति भावः। यस्या मुखसुषमा तथाभूता वर्णितलक्षणा सा राधा मदुरसि किमात्मानं धास्यति इतीदमुत्तरार्धं दूरगमनेनैताभ्यां न श्रुतम्॥ राधामित्यवगम्य कृष्ण आह—सखे इति॥ भ्रमरेऽपीति। अनिलेन तृणाञ्चले चञ्चति सति॥

(ततः प्रविशति पद्मामधुमङ्गलाभ्यां संगता चन्द्रावली ।)

चन्द्रावली—हला पउमे, किं एसो बउलकुण्डगो दीसइ । (क)

पद्मा—अध इम् । ता तूर्णं एहि । (ख) (इति परिक्रामति ।)

कृष्णः—(नूपुररवमाकर्ण्य ।) हन्त, भूरिशो भ्रामितोऽसि भ्रमरीझङ्कारैः । तदलं वृथा प्रत्युद्गमसंभ्रमेण । (इत्युद्वेगं नाटयन् ।)

पुरःफलायामाशायां जनः कामं विडम्ब्यते ।
आसन्ने हि घनारम्भे द्विगुणं रौति चातकः ॥ १८ ॥

(पुनरुत्कर्णो भवन् ।) कथमभ्यर्णे भूषणशिञ्जितं श्रूयते । (इत्युद्वीविकां दत्वा । ससंभ्रमम् ।) सत्यमसौ मिलिता मे प्रेयसी । (इति तरसा चन्द्रावलीपार्श्वमागत्य ।)

हृद्भृङ्गजङ्गमलता मङ्गलभा राधिका मयोन्मुदिता ।

(इत्यर्धोक्ते ।)

(चन्द्रावली सेर्ष्यं मधुमङ्गलमालोकते ।)

मधुमङ्गलः—सहि चन्दाअलि, मङ्गलभारेण अधिआसि ति पिअवअस्सो तुमं वण्णेदि । (ग)

कृष्णः—(सवैलक्ष्यमात्मगतम् ।) हन्त, कथमनेन चन्द्रावलिरेवाभिसारिता । भवतु । वटुनोक्तमेव निर्वाहयामि । (प्रकाशम् ।)

सुहृदनुरागवितन्द्रा चन्द्रावलिरङ्गसालम्भि ॥ १९ ॥

(चन्द्रावली सलज्जं कृष्णकण्ठे वैजयन्तीं विन्यसति ।)



कृष्णः—(सानन्दम् ।)

एकं मयाति परिचर्य चकोरराजी
चन्द्रं प्रिये निजमनोरथपूरपूर्तिम् ।

(क) हला पद्मे, किमेष बकुलकुञ्जो दृश्यते ।
(ख) अथ किम् । तत्तूर्णमेहि ।
(ग) सखि चन्द्रावलि, मङ्गलभारेणाधिकासीति प्रियवयस्यस्त्वां वर्णयति ।

पुर इति । पुरः अग्रे निकटमेव फलं यस्यास्तथाभूतायामाशायां सत्याम् ॥ हृदिति । मङ्गलभा कान्तिर्यस्याः सा राधिका उत्कर्षेणाधिक्येन । मुदिता आनन्दिता मया । उपलभ्येत्यादिकमुत्तरार्धं वर्णयितव्यत्वेन यावन्मनसि भावितमास्ते तावच्चन्द्रावली सेर्ष्यमित्यादि ॥ सवैलक्ष्य सविस्मयम् ॥ एकमित्यादि । चकोरराजी चन्द्रं परिचर्य मनोरथपूराणां

चन्द्रावली किमु ममाक्षिचकोरयोस्त्वं
प्रीतिं द्वयोरपि न धास्यसि सेव्यमाना ॥ २० ॥

**मधुमङ्गलः**—(सगर्वम्।) भो वअस्स, दिट्ठा तुए मज्झ विलक्खणविअक्खणदा। जो क्खु अणन्तगुणसालिणावि तुए मोआइदुं ण पारिदो सो पिअसहीए माणगण्ठी णअगुणधारिणा मए मोआविदो। (क)

**कृष्णः**—वयस्य, त्वमुद्दण्डकुसुमकोदण्डविलासपाड्गुण्ये महासांधिविग्रहिकोऽसि।

**पद्मा**—अज्ज, पुरो पफुल्लाइं मल्लीपुप्फाइं पप्फुरन्ति। ता एहि। इमाइं गेण्हम्ह। (ख)

(इत्युभौ निष्क्रान्तौ।)

**कृष्णः**—(स्वगतम्।) कुञ्जेऽस्मिन्नागतमात्रां राधां तर्कयामि। तदन्यतः प्रस्थास्ये। (प्रकाशम्।) प्रिये, पुरस्तान्नातिदूरे नागररङ्गोचिता नागकेसराटवी। तदत्रैवानुसरावः।

(इति निष्क्रान्तौ।)

(ततः प्रविशति ललितया सह सकथयन्ती राधा।)

**राधा**—हला, पेक्ख पेक्ख। अन्धआरेहिं घोलिदं सव्वं दिसामुहम्। (ग)

---

(क) भो वयस्य, दृष्टा त्वया मम विलक्षणविचक्षणता। यः खल्वनन्तगुणशालिनापि त्वया मोचयितुं न पारितः स प्रियसख्या मानग्रन्थिर्नवगुणधारिणा मया मोचितः।

(ख) आर्य, पुरः प्रफुल्लानि मल्लीपुष्पाणि प्रस्फुरन्ति। तदेहि। इमानि गृह्णीव।

(ग) हला, पश्य पश्य। अन्धकारैर्घोरितं सर्वं दिङ्मुखम्।

---

पूर्तिं प्रयाति प्राप्नोति। त्वं चन्द्रावली चन्द्रश्रेणी ममाक्षिचकोरौ द्वावेव अतस्तयोः प्रीतिं कथं न धास्यसि। अत्र नाश्चर्यमिति भाव.॥ त्वमित्यादि। 'संधिर्नो विग्रहो यानमासन द्वैधमाश्रयः' इति षड्गुणाः। षड्गुणा एव षाड्गुण्यम्। चातुर्वर्ण्यादित्वात्ष्यञ्। षाड्गुण्ये षट्सु गुणेषु मध्ये संधिविग्रहयोर्नियुक्तः सांधिविग्रहिकः स चासौ महांश्चेति तथा भवता संधिः

**ललिता**—पिअसहि, तिमिराहिसारोचिदेहिं सामलपसाहणेहिं मण्डिदो तुए किं क्खु अप्पा । (क)

**राधिका**—अध इम् । (ख)

**ललिता**—(विलोक्य । सस्मितम् । सस्कृतेन ।)

धम्मिल्लोपरि नीलरत्नरचितो हारस्त्वया रोपितो
विन्यस्तः कुचकुम्भयोः कुवलयश्रेणीकृतो गर्भगः ।
अङ्गे कल्पितमञ्जनं विनिहिता कस्तूरिका नेत्रयोः
कंसारेरभिसारसंभ्रमभरान्मन्ये जगद्विस्मृतम् ॥ २१ ॥

**राधिका**—हला, मुञ्चेहि परिहासं । तुरिअं उद्देसेहि केसरकुण्डगमग्गम् । (ग)

**ललिता**—इदो इदो पिअसही । (घ) (इति परिक्रामन्ती सशङ्कम् । सस्कृतेन ।)

तिमिरमसिभिः संवीताङ्गचः कदम्बवनान्तरे
सखि मुररिपुं पुण्यात्मानः सरन्त्यभिसारिकाः ।
तव तु परितो विद्युद्वर्णास्तनुद्युतिसूचयो
हरि हरि घनध्वान्तान्येता स्वैरिणि भिन्दते ॥ २२ ॥

**राधिका**—अलं इमिणा उवालम्भेण । पेक्ख पच्चासण्णो बउलकुण्डगो । (ङ) (इति सभ्रमादुपसृत्य सपरामर्षम् । सस्कृतेन ।)

---

(क) प्रियसखि, तिमिराभिमारोचितै श्यामलप्रसाधनैर्मण्डितस्त्वया किं खल्वात्मा ।

(ख) अथ किम् ।

(ग) हला, मुञ्च परिहासम् । त्वरितमुद्दिश केशरकुञ्जमार्गम् ।

(घ) इत इत. प्रियसखी ।

(ङ) अलमनेनोपालम्भेन । पश्य प्रत्यासन्नो बकुलकुञ्ज. ।

---

पथ दुष्करो भवतीति भाव ॥ तयोर्विलासोत्सुक्यमवधार्य मधुमङ्गल विप्रलम्भयन्त्या पथया छलेन स्वय वियुज्यते ॥ **धम्मिल्लोपरीति** । कुचकुम्भयोरुचित इत्यर्थः । **अङ्गे इति** । नेत्रयोरुचितमित्यर्थः । **नेत्रयोरिति** । अङ्ग उचिता इत्यर्थ. ॥ **तिमिरेत्यादि** । तिमिरमेव मसिर्लेपनयोग्य दलिताञ्जन तया सवीताङ्गय. सरन्ति मजन्ति । तव तु वैपरीत्यमित्याह । तनुद्युतय एव सूचयो घनध्वान्ता भिन्दते स्फोटयन्ति । तेन तनुद्युतीनां

विदूरान्न घ्राणं मदयति मुरारेः परिमलो
न कुञ्जोऽयं तस्य स्फुरति नखरद्योतिनिकरैः।
ततः शङ्के कस्मिन्नपि रहसि वल्लीवलयिते
परीहासाकाङ्क्षी प्रियसखि निलीनस्तव सखा॥ २३॥

ललिता—हला, एहि। वामदो कदम्बकुण्डगं विइणम्ह। (क)

राधिका—(तथा कुर्वती।) अइ छइल्ल, दिट्ठोसि दिट्ठोसि। कीस अङ्गेहिं अङ्गाइं संगोवेसि। (ख) (इति समन्तान्मृग्यति।)

ललिता—सहि, मुञ्च मग्गेणग्गहम्। एहि। केलिकुण्डगकप्पणं कुणम्ह। (ग)

राधिका—(संस्कृतेन।)

रचय बकुलपुष्पैस्तोरणं केलिकुञ्जे
कुरु वरमरविन्दैस्तल्पमिन्दीवराक्षि।
उपनय शयनान्तं साधु माध्वीकपात्रीं
सहचरि हरिरद्य श्लाघतां कौशलं ते॥ २४॥

ललिता—(तथा कृत्वा।) हला, पेक्ख। कण्हो विलम्बेदि। ता कुञ्जं पविसिअ णं पडिवालेम्ह। (घ)

राधिका—(परिक्रम्य। उद्वेगं नाटयन्ती। संस्कृतेन।)

रुद्धः कापि सखीहितार्थपरया शङ्के हरिः पद्मया
प्राप्तः कुञ्जगृहं यदेष न तमीयामेऽप्यतिक्रामति।

---

(क) हला, एहि। वामतः कदम्बकुञ्जं विचिन्मः।
(ख) अयि विदग्ध, दृष्टोऽसि दृष्टोऽसि। कस्मादङ्गैरङ्गानि संगोपयसि।
(ग) सखि, मुञ्च मार्गणाग्रहम्। एहि। केलिकुञ्जकल्पनं कुर्मः।
(घ) हला, पश्य। कृष्णो विलम्बते। तत्कुञ्जं प्रविश्यैनं प्रतीक्षेवहि।

---

नीलाम्बरावृतत्वेऽपि तन्तूपान्तसूक्ष्मसूक्ष्मरन्ध्रेभ्यो निर्गच्छन्तीनामप्यत्यौज्ज्वल्य ध्वान्तानामपि सूचीविधयोग्यत्वेनातिगाढत्व व्यञ्जितम्। हे स्वैरिणि, स्वस्य आत्मनो वैरिणी स्वयमेव त्व एतासु न तथेति व्याजस्तुत्या सर्वतोऽतिविलक्षण सौन्दर्यं वर्णितमिति। **तमीयामेऽप्यतिक्रामतीति**। तेन वैशाखपौर्णमास्या अन्तरा चतुर्थातिथिरियमिति

पौलोमीरतिबन्धुदिङ्मुखमसौ हा हन्त संतर्पय-
न्नुन्मीलत्यभिसारलुब्धरमणीगोत्रस्य शत्रुः शशी ॥ २५ ॥

(इत्युभे निष्क्रान्ते ।)

(ततः प्रविशति कृष्णः ।)

**कृष्णः**—(समन्तादवलोक्य ।)

आसङ्गः कुमुदाकरेषु शिथिलो भृङ्गावलीनामभू-
द्वीक्षन्ते निजकोटराङ्कितममी क्षोणीरुहं कौशिकाः ।
संकोचोन्मुखतां प्रयाति शनकैरौत्तानपादेर्द्युतिः
किं भानुर्ननु पूर्वपर्वततटीमारोढुमुत्कण्ठते ॥ २६ ॥

(इति परिक्रम्य ।) न जाने नवीनविप्रलम्भेन संभृतनिर्भरसंरम्भा किं नाम प्रतिपत्स्यतेऽद्य राधा। (विमृश्य ।) भवतु। केसरेण नागकेसरं प्रतिपादयिष्ये। तदमूनि नागकेसराणि विचिनुयामि । (इति तथा कृत्वा पुरोऽनुसर्पन् ।)

कपटी कुलताकुटीमिमां सखि नागादधुनापि माधवः ।
इति जल्पपरीतया तया क्रमदीर्घा गमिता कथं तमी ॥ २७ ॥

(परिक्रम्य । बकुलकुञ्जं पश्यन् । सविषादम् ।)

ताम्बूलं घनसारसंस्कृतमदः क्षिप्तं पुरो राधया
हारी हन्त हरिन्मणिस्तबकितो हारोऽयमुत्सारितः ।
पौष्पी चेयमुदारसौरभमयी चूडा नखैः खण्डिता
तस्याः शंसति विप्रलम्भजनितं कुञ्जोऽयमन्तः क्रमम् ॥ २८ ॥

(इत्यग्रतो गत्वा ।) इयमेव राधायाः सूर्याराधनवेदिका । तदस्याः पार्श्वमासादयामि । (इति परिक्रामति ।)

---

गम्यते । पौलोमी शची तस्या रतिबन्धुरिन्द्रस्तस्य दिशः पूर्वस्या मुखं सम्यक्प्रकारेण तर्पयन् । स्वदर्शनस्वकरलालनादिभिरिति भावः । स्वयमिन्द्रनायिका पूर्वां दिशमभिसरति, अथ चान्यासामभिसारिकाणां शत्रुरित्याश्चर्यम् ॥ **आसङ्ग इति** । निजकोटराङ्कितं क्षोणीरुहं वृक्षं कौशिकाः पेचका वीक्षन्ते । औत्तानपादेर्ध्रुवस्य नक्षत्रावारम्य ॥ **न जाने इति** । नवीनेन विप्रलम्भेन प्रथमवियोगेन सम्भृतनिर्भरसंरम्भा धृतातिशयकोपा । प्रतिपत्स्यते ज्ञास्यति । मया मुक्ताहारोक्तेन बकुलवाचककेसरपदेनाधुना नागकेसरं प्रतिपादयिष्यति ॥ **ताम्बूलमिति** । घनसारेण कर्पूरेण संस्कृतम् । हारी मनोहारी । हरिन्मणिभिः

(ततः प्रविशति सखीभ्यामनुगम्यमाना राधा ।)

**राधा**—(पुरो विलोक्य ।) हला ललिदे, पेक्ख वेइआणेदिट्ठो सो तुज्झ छइल्लो । (क)

**ललिता**—सहि, कञ्चणपडिमे व कठोरा होहि । (ख)

**कृष्णः**—पुरस्तादेषा सहपरिवारा प्रिया। तदिदमुद्दङ्कयामि। (इत्युपसृत्य।) ललिते, साधु साधु। दृष्टं तव गरिष्ठमत्र दुर्मन्त्रतन्त्रचर्यायामाचार्यत्वम्। यदद्य भवत्या केसरनिकुञ्जवेद्यामहमुज्जागरव्रतदीक्षां परिग्राहितोऽस्मि ।

**ललिता**—(ससंरम्भम्। संस्कृतेन ।) अहो वैपरीत्यम्, अहो वैपरीत्यम् ।

केसरनिकुञ्जकुहरे कुहकं वसन्ती सखी त्वया रहिते ।
श्रितनवपल्लवशयना त्रुटिमपि कल्पाधिकां मेने ॥ २९ ॥

**कृष्णः**—(कपटेनाटोपं नाटयन् ।) अहो, दम्भभरारम्भेषु गाम्भीर्यमस्याः । (इति नागकेसराण्युद्घाट्य दर्शयन् ।)

अरतिं मम निशि पश्यन्नक्राम्यन्नागकेसरोऽप्यसकृत्।
विगलन्मधुभिः कुसुमैरेभिर्नेत्रैरिवोदस्रैः ॥ ३० ॥

**ललिता**—अम्महे धूत्तत्तणं, जं बउलवाइणा केसरेण दाणिं णागकेसरो विक्खावीअदि । (ग)

**कृष्णः**—(सव्याजनिर्वेदम् ।) ललिते, विश्राम्यतु तवेयं शब्दार्थस्यान्यथाकल्पनेन वचनचञ्चुता । अथ वा कस्ते दोषः । दृष्टदोषाभिरपि गौराङ्गीभिः सौहार्दमभिलष्यता मयैवापराद्धम् ।

---

(क) हला ललिते, पश्य वेदिकानेदिष्ठः स तव नागरः ।

(ख) सखि, काञ्चनप्रतिमेव कठोरा भव ।

(ग) अहो धूर्तत्वम्, यद्बकुलवाचिना केसरेणेदानीं नागकेशरो विज्ञाप्यते ।

---

स्तबकितो गुच्छीकृतो हारः कुञ्ज इत्येतादृशलक्षणविशिष्ट इत्यर्थः ॥ **हलेति** । नेदिष्ठः सन्निकृष्टः ॥ **पुरस्तादित्यादि** । दुष्टा मन्त्रा येष्वेवंभूतं यत्तन्त्रं तस्य चर्यायामाचरणे आचार्यत्वमुपदेशादिकर्तृत्वमित्यर्थः । मनोज्ञादित्वाद्वुञ् ॥ आटोपमतिप्रतिभाम् । **अरतिमिति** । अरतिं खेदम् ॥ **अम्महे इति** । संकेतस्तु केसरकुञ्जे कृतः । स च केसरशब्दो बकुलवाची । 'अथ केसरो बकुल.' इत्यभिधानप्रसिद्धेः । नागकेसरे तु प्रसिद्ध्यभावादिति ललिताभिप्रायः ॥ 'चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः' इत्यभिधाने स्वरूपवरुप्या-

**विशाखा**—को क्खु गोरङ्गीणं दिट्ठो तुए दोसो । (क)

**कृष्णः**—पश्य पश्य ।

नवरसधारिणि मधुरे धरणीसंतापहारिविस्फुरणे ।
विदधति न कृष्णमुदिरे गौर्यः क्षणरोचिषः स्थैर्यम् ॥ ३१ ॥

**विशाखा**—तस्सिं कुलिसकूडकठोरचेट्ठिदे ताणं कोमलाणं जुत्ता ज्जेव्व तधा पउत्ती । (ख)

**ललिता**—विसाहे, सुणाहि कंपि गाहम् । (इति भृङ्गं दर्शयन्ती ।)

चम्पअलदं सिणिद्धं णअकञ्चणकन्तिकुसुमगोरङ्गी ।
मुक्किअ धावइ भमरो चवला चिअ सामला होन्ति ॥ ३२ ॥(ग)

**कृष्णः**—(स्मित्वा ।) सत्यं वाग्मिनामसि राज्ञी ।

**ललिता**—(अपवार्य ।) सुट्ठु णीसङ्केण वअणाडोवेण अणवरद्धं ज्जेव्व णं तक्केमि । (घ)

---

(क) कः खलु गौराङ्गीणां दृष्टस्त्वया दोषः ।

(ख) तस्मिन्कुलिशकूटकठोरचेष्टिते तासां कोमलानां युक्ता एव तथा प्रवृत्तिः ।

(ग) विशाखे, शृणु कामपि गाथाम् ।

चम्पकलतां स्निग्धां नवकाञ्चनकान्तिकुसुमगौराङ्गीम् ।
त्यक्त्वा धावति भ्रमरश्चपला इव श्यामला भवन्ति ॥

(घ) सुष्ठु निःशङ्केन वचनाटोपेनानपराद्धमेवैनं तर्कयामि ।

---

भावेनैव वृत्तेस्तथाशब्दार्थस्येति 'भीमसेनो भीमः, सत्यभामा भामा' इति न्यायेन केसरशब्दस्यार्थो नागकेसर एव तत्कुञ्ज एव मयाभिप्रेतः । भवत्या तु बकुलकुञ्ज इत्यन्यथार्थकल्पनेन मद्भञ्जनमेव क्रियते । तेनैव त्व ख्यातासीत्यर्थः । 'तेन वित्तश्चञ्चुप्चणपौ' इति चञ्चुप्प्रत्ययः । गौराङ्गीभिः सौहार्दमभिलष्यता मयैवापराधः कृत इत्यर्थः ॥ **नवेत्यादि** । नवरसधारिणि अभिनवजलधारिणि । पक्षे 'शान्तोऽपि नवमो रसः' इति रीत्या शृङ्गारादिनवरसाश्रये कृष्णवर्णे मुदिरे मेघे । पक्षे कृष्णोऽय मुदिर इवेति व्याघ्रादित्वात्समासः । क्षणरोचिषो विद्युतः। पक्षे क्षणमात्रा रोचिः कान्तिर्यासाम् । तदानीमेव महाननुरागस्तदानीमेव विरागेण वैपरीत्यमिति भावः । अत्र गौर्य इति विशेषणपद विशेष्यपदं च ॥ **तस्मिन्निति** । तया प्रवृत्तिर्विद्युदिव प्रवृत्तिरित्यर्थः । वज्रस्य यथा क्षेपणादिरूप-

कृष्णः—

वाम्याङ्कुरेन्न विरतिर्नवयौवनानां
वामभ्रुवामिति जनश्रुतिरव्यलीका ।
चाटूनि कर्तुमुचितानि विमुच्य खिन्नं
मां प्रत्युताद्य यदमूरपरं जयन्ति ॥ ३३ ॥

ललिता—(अपवार्य ।) हला, सच्चं उज्जाअरखिन्नो कण्हो । ता पसीद । (क)

राधिका—(कृष्णमपाङ्गेनावलोक्य ।) मुद्धाणं वञ्चणकलाविअद्धोसि । (ख)

कृष्णः—(सानन्दम् ।) फुल्लकेसरकलापेनामुना धम्मिल्लश्रीस्त्वयालंक्रियताम् । वन्ध्यतां मा विन्दतु मम प्रयासः । (इति पुटिकामुद्घाट्य ।) प्रिये, पश्यामूनि सुगन्धीनामग्रेसराणि केसराणि यैरहं सद्यः सुवासितोऽस्मि ।

राधिका—(सनर्मस्मितम् ।) णूणं चन्दाअलीपरिमलेण वासिदोसि तुमम् । (ग)

कृष्णः—प्रिये, पारिहासिकान्यपि ते वचांसि न कदाचिदपि व्यभिचरन्ति । यदद्य मदङ्गतश्चन्द्रावलीसौरभ्यमुदञ्चति ।

राधिका—(सेर्ष्यं परावृत्य ।) ललिदे, किं मुद्दिदकण्णासि । (घ)

कृष्णः—(स्मित्वा ।) प्रिये, कथमक्षरसाम्यादक्षमासि । यदहं कर्पूरावलीं वर्णयामि ।

राधिका—(सस्मितम् ।) समप्पेहि पुप्फाइं । (ङ) (इति पटाञ्चलं प्रसारयति ।)

---

(क) हला, सत्यमुज्जागरखिन्नः कृष्णः । तत्प्रसीद ।
(ख) मुग्धानां वञ्चनकलाविदग्धोऽसि ।
(ग) नूनं चन्द्रावलीपरिमलेन वासितोऽसि त्वम् ।
(घ) ललिते, किं मुद्रितकर्णासि ।
(ङ) समर्पय पुष्पाणि ।

---

कठोरचेष्टा तत्तुल्यचेष्टिते त्वयीत्यर्थः ॥ वाम्यादित्यादि । कर्तुमुचितानि चाटूनि विमुच्य त्यक्त्वा प्रत्युत मामपरं जयन्ति दुःखयन्ति । कटु वदन्तीत्यर्थः ॥ सनर्मस्मित-

**कृष्णः**—(राधामुख प्रेक्ष्य । स्वगतम् ।) हन्त, विभ्रममण्डितस्य चिल्लिकोदण्डस्य ताण्डवकला ।

**विशाखा**—(जनान्तिकम् ।) ललिदे, पेक्ख पेक्ख । संमोहणेण राहीए कडक्खवाणेण लक्खीकिदो पुप्फपुडिआए सद्धं अञ्चले दिण्णंपि वेणं ण जाणादि कण्हो । (क)

**ललिता**—(संस्कृतेन ।)

निद्रागमेऽपि सखि नन्दसुतस्य हर्तुं
यां शक्नुवन्ति न परा. पशुपालबालाः ।
धन्या कटाक्षकलया किल मोहयन्ती
तां राधिकाद्य पुरतो मुरलीं जहार ॥ ३४ ॥

**राधिका**—(अपवार्य । संस्कृतेन ।)

या निर्माति निकेतकर्मरचनारम्भे करस्तम्भनं
रात्रौ हन्त करोति कर्षणविधिं या पत्युरङ्कादपि ।
गौरीणां कुरुते गुरोरपि पुरो या नीविविध्वंसनं
धूर्ता गोकुलमङ्गलस्य मुरली सेयं ममाभूद्वशा ॥ ३५ ॥

(नेपथ्ये ।)

अरे कुरङ्गा, दिट्ठो तुह्मेहि पिअवअस्सो । (ख)

**कृष्णः**—कथं मिलत्येष मधुमङ्गलः ।

(प्रविश्य माल्यहस्त.)

**मधुमङ्गलः**—सुदं सुबलमुहादो जं अज्ज णिउञ्जमज्झे राहिआ जागरिदा आसि । ता गदुअ णं पोच्छाहइस्सम् । (ग) (इत्युपसृत्य । संस्कृतेन ।)

---

(क) ललिते, पश्य पश्य । संमोहनेन राधाया कटाक्षबाणेन लक्षीकृत. पुष्पपुटिकया सार्धमञ्चले दत्तमपि वेणु न जानाति कृष्ण. ।

(ख) अरे कुरङ्गा, दृष्टो युष्माभि प्रियवयस्य. ।

(ग) श्रुत सुबलमुखादद्य निकुञ्जमध्ये राधिका जागरितासीत् । तद्गत्वैना प्रोत्साहयिष्यामि ।

---

मिति मिथ्यादोषारोपणात् ॥ राधामुखं प्रेक्ष्येत्यादि । चिल्लिकोदण्डस्य भ्रुव·

अविरलवनमालालंकृतस्निग्धमूर्तिः
स्फुरितकटककान्तिर्धातुभिर्मण्डिताङ्गः ।
अखिलभुवनतुङ्गो नेत्रभङ्ग्या विकृष्टः
कथमिव सखि राधे कृष्णशैलस्त्वयाभूत् ॥ ३६ ॥

(राधिका स्मयते ।)

कृष्णः—प्रिये, वेत्ति मे तमस्तमीसंभवं वयस्योऽयम् ।

राधिका—अज्ज, दंसिदं अज्ज सिणेहदक्खिणं जं कन्तारसिन्धुसंतारकोसलाइं सिक्खविदह्मि । (क)

मधुमङ्गलः—सहि, साहु अह्मे उवालहिज्जह्म, जेहिं चलन्तीं पि वल्लीं तुमं तक्किअ वणे वसन्तेहिं सादङ्कं जाअरिदम् । तुह्मे क्खु सलाहिज्जइ, जाहिं पिअवअस्ससणाहं पि कुञ्जं अणिब्बन्धेण सुण्णं भणिअ घरे पविसन्तीहिं णिरादङ्कं सुत्तम् । (ख)

राधिका—अज्ज, किं एव्वं भणासि । (ग) (इति संस्कृतेन ।)

निकुञ्जं कंसारेर्वत नखरचन्द्रावलिरुचि-
च्छटामस्तं नाम्ने मुहुरपि यदा प्रेक्षितमभूत् ।
तदा सद्यः प्रोद्यद्विधुहतकविक्रान्तिहतया
मया लब्धारण्ये क्रमनिबद्धपूर्णा परिणतिः ॥ ३७ ॥

---

(क) आर्य, दर्शितमद्य स्नेहदाक्षिण्यं यत्कान्तारसिन्धुसंतारकौशल्यानि शिक्षितास्मि ।

(ख) सखि, साधु वयमुपालभ्यामहे, यैश्चलन्तीमपि वल्लीं त्वां तर्कयित्वा वने वसद्भिः सातङ्कं जागरितम् । यूयं खलु श्लाघ्यध्वे, याभिः प्रियवयस्यसनाथमपि कुञ्जमनिर्बन्धेन शून्यं मत्वा गृहे प्रविशन्तीभिर्निरातङ्कं सुप्तम् ।

(ग) आर्य, किमेवं भणसि ।

---

गुरः ॥ संमोहनेनेत्यादि । लक्षणेन सिद्ध इत्यर्थः ॥ अविरलेति । अविरलया वनमालया वनश्रेण्या चालङ्कृता स्निग्धा मूर्तिर्यस्य सः । कटकानां वलयानां नितम्बानां च । 'कटके वलयोऽस्त्रियाम्', 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । धातुभिर्गैरिकादिभिः ॥ तमस्तमीसंभवमिति । तमः गाढान्धकारं दुःखम् ॥ अज्ज दंसिदमिति । कान्तारः वनभ्रमणादौ यद्दुर्गमत्वं तदेव सिन्धुः ॥ निकुञ्जमिति । नखरा एव चन्द्रास्तेषामावलिः पङ्क्तिस्तस्या रुचिच्छटाभिर्मस्तं मुहुरपि निकुञ्जं प्रेक्षितं दृष्टमभूत् । यदा

**मधुमङ्गलः**—अहो, कहं कुडङ्गसंगदा चन्द्राअली वि राहिआए दिट्ठत्थि । ता वञ्चणं मुक्किअ णं उरिसइस्सम् । (क) (प्रकाशम् । संस्कृतेन ।)

क्लान्तेन ते वदनचन्द्रमनाकलय्य
कल्याणि गोकुलपुरंदरनन्दनेन ।

चन्द्रावली—

(इत्यर्धोक्ते ।)

(कृष्णो भ्रूसंज्ञया निवारयति ।)

(सर्वाः परस्परं साकूतमवलोकयन्ति ।)

**मधुमङ्गलः**—(स्वगतम् ।) हन्त हन्त, किदं मए बम्हणबट्टुओचिदं चावलम् । (ख)

**कृष्णः**—(विभाव्य ।) विभावरीभवं मे वरीयः कष्टं बाष्परुद्धकण्ठोऽयं संवृत्तः । तदहमेव वाक्यं समापयामि । (इति स्मित्वा ।)

चन्द्रावली न नयनान्ततया किलास्य
सा दृश्यतः कथमपि क्षपिता क्षपेयम् ॥ ३८ ॥

**मधुमङ्गलः**—पिअवअस्स, सव्वण्णोसि । किंति मह हिअट्ठिदं पज्झद्धं ण जाणिस्ससि । (ग)

**ललिता**—राहे, अज्ज वि संदिद्धासि । पेक्ख रत्तिविलासपिसुणाइं णाअरस्स चङ्गाइं अङ्गाइं । (घ) (इति सेर्ष्यम् । संस्कृतेन ।)

---

(क) अहो, कथं कुञ्जसंगता चन्द्रावल्यपि राधया दृष्टास्ति । तद्वञ्चनं त्यक्त्वैनामुत्कर्षयिष्यामि ।

(ख) हन्त हन्त, कृतं मया ब्राह्मणबटूचितं चापलम् ।

(ग) प्रियवयस्य, सर्वज्ञोऽसि । किमिति मम हृदयस्थितं पद्यार्धं न ज्ञास्यसि ।

(घ) राधे, अद्यापि संदिग्धासि । पश्य रात्रिविलासपिशुनानि नागरस्य चङ्गान्यङ्गानि ।

---

क्रूरा या चन्द्रावली तस्या रुचिच्छटाप्रस्त कसारेः कुञ्ज मुहुरपि वारंवारमपि यदा प्रेक्षित नाभूत् । अपि तु प्रेक्षितुमेवाभूदित्येवमर्थं निर्धार्य स्वगत परामृशति—**अहो इत्यादि** । **क्लान्तेनेति** । चन्द्रावली या अलम्भि साप्यात्तदुःखायैवास्याभूदित्युत्तरार्धं विवक्षितम् ॥ **विभाव्येति** । विभावरीभव रात्रिभवम् । वरीयः अतिशयितम् । कष्ट मम । विभाव्य विचिन्त्य । अथ मधुमङ्गलो बाष्परुद्धकण्ठः संवृत्तः ॥ चन्द्रावलीनयनान्ततयेत्यादितः पठितव्यम् । चन्द्रेऽवलीनो नयनान्तो यस्य तत्तया । अस्य ते वदनचन्द्रस्य । क्षपिता

बाले गोकुलयौवतस्तनतटीदत्तार्धनेत्रादितः
कामं श्यामशिलाविलासिहृदयाच्चेतः परावर्तय ।
विघ्नः किं न हि यद्विकृष्य कुलजाः केलीभिरेव स्त्रियो
धूर्तः संकुलयन्कलङ्कततिभिर्निःशङ्कमुन्मुञ्चति ॥ ३९ ॥

राधिका—हद्धी हद्धी, सुट्ठु विडम्बिदह्मि । (क)

कृष्णः—प्रिये, मुधैव मां दूषयसि ।

राधिका—(सोपालम्भम् । संस्कृतेन ।)

मुक्तान्तर्निमिषं मदीयपदवीमालोकमानस्य ते
जाने केसररेणुभिर्निपतितैः शोणीकृते लोचने ।
शीतैः काननवायुभिर्विरचितो बिम्बाधरे च व्रणः
संकोचं त्यज देव दैवहतया न त्वं मया दूष्यसे ॥ ४० ॥

कृष्णः—प्रिये, तवाधीनस्य मे संकोचोऽप्यलंकारायैव ।

राधिका—साहीणो सवलोअविक्खादोसि । कधं ममाहीणो हुविस्ससि । (ख)

कृष्णः—तवाधीनो नाहमेव केवलोऽस्मि । किंतु ते मम दशावताराश्च । तथा हि ।

चञ्चन्मीनविलोचनासि, कमठोत्कृष्टस्तनी संगता,
क्रोडेन स्फुरता तवायमधरः, प्रह्लादसंवर्धनः ।
मध्योऽसौ बलिबन्धनो, मुखरुचा रामास्त्वया निर्जिता,
लेभे श्रीघनताद्य, मानिनि मनस्यङ्गीकृता कल्किता, ॥ ४१ ॥

---

(क) हा धिक् हा धिक्, सुष्ठु विडम्बितास्मि ।

(ख) स्वाधीनः सर्वलोकविख्यातोऽसि । कथं ममाधीनो भविष्यसि ।

---

यापिता ॥ 'लङ्गचङ्गमनोहरे' इत्यमरः । बाले इति । श्यामशिलेव विलासिहृदय यस्य । कलङ्कसमूहं संकुलयन् व्यापयन् ॥ मुक्तान्तरित्यादि । मुक्तं त्यक्तं अन्तर्मध्यनेत्रेऽपि निमिषं यत्र एवं यथा स्यात् । केसररेणुभिरेव न तु संभोगजागरैः । व्रण इति । न तु प्रियादन्ताघातैरिति ॥ चञ्चन्मीनेति । स्फुरता क्रोडेन क्रोडदेशेन संगता । शब्दश्लेषेण क्रोडो वराहः । प्रकर्षेणाह्लादमानन्दम् । पक्षे प्रह्लादं संवर्धयतीति नृसिंहः । बलिं बध्नातीति बलिबन्धनो वामनः, बलिभिस्त्रिवलिभिर्बन्धनं यस्येति च ।

राधिका—हला ललिदे, आअण्णिदं तुए। (क)

ललिता—कण्ह, तुह ओदारा तुअम्मि जेव वसन्ति, जं एदाणं चिन्हाइं दीसन्ति। (ख) (संस्कृतेन।)

वन्यान्तर्गुरुचापलं, कठिनता, गोसंगतिः, पाणिजे
क्रौर्यं, दम्भरुचिः, सुचण्डिमधुरा, लङ्केशविध्वंसनम्।
अश्रान्तोन्मदलौल्यमिष्टकदनं, निस्त्रिंशलीलोन्नति-
र्मीनेन्द्राद्यवतारतः स्फुटममी भ्राजन्ति भागास्त्वयि ॥ ४२ ॥

कृष्णः—(सस्मितम्।) सखे, पश्य पश्य।

ललिताजनि दुर्ललिता बभूव राधा दुराराधा।
तस्ते मयि न च्छायां शशाक कर्तुं विशाखेयम् ॥ ४३ ॥

(इति बटोः करान्मल्लीदाम गृहीत्वा। सचाटुप्रणामम्।)

स्रगियमुरुगुणा ते चित्तवीथीव राधे
शुचिरतिसुकुमारी काममामोदनी च।

---

(क) हला ललिते, आकर्णितं त्वया।

(ख) कृष्ण, तवावतारास्त्वय्येव वसन्ति, यदेतेषां चिह्नानि दृश्यन्ते।

---

रामा रमण्यः, शब्दश्लेषेण त्रयो रामाश्च। श्रिया कान्त्या घनता निबिडता च त्वया लेभे, श्रीघनो बुद्धश्च। मनसि कल्किता मालिन्यम्। इदानीं मानावसरे क्रौर्यमित्यर्थः, कल्की चान्तिमोऽवतारः ॥ **वन्यान्तरिति**। वन्या(न्य) वनसमूहो जलसमूहश्च तन्मध्ये गुरुचापलमिति मत्स्यलक्षणम्। कठिनतेति कूर्मलक्षणम्। गोसंगतिरिति वराहलक्षणम्। गौः पृथ्वी, पक्षे स्पष्टम्। पाणिजानां नखानां क्रौर्यं क्षीणा हिरण्यकशिपोश्च वक्ष(क्षो)विदारणेनेति नृसिंहलक्षणम्। दम्भे कापट्यहेतौ रुचिर्यस्येति वामनलक्षणम्। सुष्ठु चण्डिम्नो धूर्भारः। 'ऋक्पूरब्धूःपथामानक्षे' इत्यकारसमासान्तात् ततष्टाप्। सुचण्डिमधुरा इति परशुरामलक्षण तस्याम(म्य) प्राधान्यात्। अलमतिशयेन केशानां विध्वंसनमाकर्षणम्, अर्थात्स्त्रीणाम्, लङ्केशो रावणस्तस्य विध्वंसनं चेति रामलक्षणम्। अश्रान्तमविरतमुत्कण्ठेन मदेनाहंकारेण मदिरादिजनितमत्त[ता]या च लौल्यं चापल्यमिति बलरामलक्षणम्। इष्टानां सुहृदां अस्माकं कदनं दुःखदायित्वम्, इष्टं यज्ञश्च तस्य कदनं विनाशनं चेति बुद्धलक्षणम्। निस्त्रिंशस्य खड्गस्येव तीक्ष्णया लीलया उन्नतिर्यस्य, पक्षे खड्गधारित्वं कल्किलक्षणम् ॥ **ललितेति**। दुर्ललिता लालित्यरहिताजनि। विशाखेति विगता शाखा यस्याः सेति च ॥ **स्रगियमिति**। चित्तस्य वीथी मार्गः। शुचिरिति शावत्। तत्पक्षेऽयं स्रक् तव शुचमस्य-

नखपदशशिरेखा धाम्नि पुष्णातु कान्तिं
तव कुचशिवमूर्ध्नि स्वर्धुनीविभ्रमेण ॥ ४४ ॥

(इति भ्रूसंज्ञया विशाखामनुकूलयन्माल्यमर्पयति।)

विशाखा—(माल्यं निवेदयन्ती। संस्कृतेन।)

यस्मिन्नेत्रसरोरुहाङ्गन(ण)भुवः प्राप्ते विदूरं मना-
क्सद्यस्ते निमिषोऽपि याति तुलनां तन्वङ्गि मन्वन्तरैः।
वृन्दारण्यकदम्बमण्डपतटक्रीडाभराखण्डले
तस्मिन्काकुपरायणे तव कथं काम्यानि वाम्यान्यपि ॥ ४५ ॥

राधिका—(साभ्यसूयम्।) अवेहि णिब्बुद्धिए, अवेहि। (क)

कृष्णः—

धूलिधूसरितचन्द्रकाञ्चलश्चन्द्रकान्तमुखि वल्लभो जनः।
अर्पयन्मुहुरयं नमस्क्रियां भिक्षते तव कटाक्षमाधुरीम् ॥ ४६ ॥

ललिता—राहे, झत्ति कन्धरं परावट्टेहि। पुट्ठदो आआरेदि अ-
ज्जिआ। (ख)

(राधिका तथा करोति।)

(प्रविश्य।)

मुखरा—(कृष्णं विलोक्य। संस्कृतेन।)

घनासक्तं चेतः प्रणयति गृहाद्यो विरमय-
न्वरेण्यं बन्धूनां प्रणयमपि विस्मारयति यः।

(क) अपेहि निर्बुद्धिके, अपेहि।
(ख) राधे, झटिति कन्धरां परावृत्त(वर्त)य। पृष्ठत आकारयत्यार्या।

शिवमूर्ध्नि स्वर्धुनी गङ्गा तस्या विलासेन कान्तिं पुष्णातु। नखचिह्नान्येव शशिरेखास्तस्या धाम्नि॥ यस्मिन्निति। हे तन्वङ्गि, एवंभूते तस्मिन् काकुपरायणे तव वाम्यानि काम्यानि इच्छास्पदानि भवन्ति। अर्थाच्चैवेति शेषः। तत्र कारणमाह—यस्मिन् श्रीकृष्णे नेत्रसरोरुहाङ्गनभूमेर्नेत्रागोचरेऽपि विदूरं प्राप्ते निमिषोऽपि मन्वन्तरैस्तुलनां प्राप्नोति। आखण्डले इन्द्रे॥ धूलीति। चन्द्रादपि कान्तं मुखं यस्या हे राधिके॥ राहे इति। झटिति इत्यर्थः। आआरेदि आह्वयति॥ घनासक्तमिति। गृहाद्वि-

महाधूर्तश्रेणीगुणगरिमविस्तारणपटोः
करोत्सङ्गे तस्य त्वमपि सरले पुत्रि पतिता ॥ ४७ ॥

**मधुमङ्गलः**—भो वअस्स, मारुदवाआलीकिदमुही तुज्झ वंशीव एत्थ वुड्डिआ पत्ता । ता एत्थ किं विलम्बेसि । (क)

**कृष्णः**—सखे, क्व मे वंशी ।

**मधुमङ्गलः**—सअं जेव्व जाणासि कह त्ति । (ख)

**कृष्णः**—स्फुटं राधिकयैव हृतेयम् । तदेनां विना कथं प्रस्थानमुचितम् ।

**मधुमङ्गलः**—(सपरिहासम् ।) भो, इदं क्खु अम्हाणं गरुअं भाअधेअं जं इमाहिं मोहणीहिं तुमं चोरिअ ण संगोविदो सि । ता चिट्ठदु वराई मुरलीआ । अत्ताणं घेत्तूण पलाअम्ह । (ग)

**कृष्णः**—(सस्मितम् ।) रे वाचाट, तिष्ठ । (इति परिक्रम्य ।)

सुन्दरि बिन्दुच्युतके तव नैपुण्यं बभूव पुण्येन ।
शशिमुखि वशीकृताभूद्वंशी मम यत्त्वया त्वरया ॥ ४८ ॥

**राधिका**—(सभ्रूभङ्गम् ।) मुञ्चेहि णं भङ्गिए कलङ्कारोवणम् । का जाणादि तुम्ह वंशिअम् । (घ)

---

(क) भो वयस्य, मारुतवाचालीकृतमुखी तव वंशीयम वृद्धा प्राप्ता । तदत्र किं विलम्बसे ।

(ख) स्वयमेव जानासि कुत्रेति ।

(ग) भो, इदं खल्वस्माकं गरिष्ठं भागधेयं यदेताभिर्मोहिनीभिस्त्वं चोरयित्वा न संगोपितोऽसि । तत्तिष्ठतु वराकी मुरलिका । आत्मानं गृहीत्वा पलायामहे ।

(घ) मुञ्चैनं भङ्ग्या कलङ्कारोपणम् । का जानाति त्वद्वंशिकाम् ।

---

रमयन् गृहाद्दूरत कृत्वा धनाराक चेतः करोतीत्यर्थः । धूर्तश्रेणीगुणानां गरिमा आधिक्यं तस्य विस्तारणे प्रकाशने पटोर्दक्षस्य ॥ तदत्रेति । शीघ्रमितो याहीति भावः ॥ तदेनामिति । एनां मुरलीं [विना] कथं मम [प्र]स्थानम् ॥ सुन्दरीति । बिन्दुच्युतकेऽलङ्कारविशेषे । तव नैपुण्यमभ्यासः । यतो वशीकृता अपनीता । पक्षे बिन्दुवि-

ललिता—(संस्कृतेन ।)

न काचिद्गोपीनां भवति परवित्तप्रणयिनी
सतीनामस्माकं न वद परिवादं ननु मुधा ।

(इलथोक्ते ।)

कृष्णः—सखि ललिते, प्रसीद । दर्शय सख्यौ दाक्षिण्यम् ।

ललिता—

अलं जल्पैरेभिर्व्रज निजनिकेतं द्रुतमितो
वयं किं संवृत्तास्तव कितव वेणोः प्रतिभुवः ॥ ४९ ॥

राधिका—(श्रद्धामासाद्य ।) अज्जे, दिट्ठं तुए अप्पणो णत्तिणो चरितम्, जं एसो अम्हाणं चोरिआपरिवादं देदि । (क)

मुखरा—(ससंरम्भम् ।) रे कण्हडा, सच्चं मए विण्णादम्, जं णत्तिअं राहिअं मह तुमं विडम्बेदुं लद्धो सि । (ख)

मधुमङ्गलः—अइ णिट्ठुरसंसिणि णिव्वंसिए, वंसिअं हरिअ तुज्झ णत्तिणी तुमं दुग्गं लद्धा । (ग)

कृष्णः—आर्ये मुखरे, सत्यमाह वयस्यः ।

मुखरा—अइ राहिए, अवि किं सच्चं एदम् । (घ)

---

(क) आर्ये, दृष्टं त्वयात्मनो नप्तुश्चरित्रम्, यदेषोऽस्मभ्यं चोरिकापरिवादं ददाति ।

(ख) रे कृष्ण, सत्यं मया विज्ञातम्, यन्नप्त्रीं राधां मम त्वं विडम्बितुं लब्धोऽसि ।

(ग) अयि निष्ठुरशंसिनि निर्वंशिके, वंशिकां हृत्वा तव नप्त्री त्वां दुर्गं लब्धा ।

(घ) अयि राधे, अपि किं सत्यमिदम् ।

---

शिरा यस्याः बिन्दुरूपा यस्यां स्फुरतीति बिन्दुच्युतकालंकारः ॥ ग्रन्थिनी निरर्गलसखा । तथा च गुम्फकः सखी त्वं यथा यथा त्वं तथा गुरुत्वं अर्थापत्तिः भाव्या परीहासः कृष्णः सम्यग् मति ॥ अलमिति । कितवो धूर्तः । प्रतिभुवो लग्नका जामिनः प्रतिष्ठाः ॥

**राधिका**—अज्जिए, वुन्दावणे इन्धणाणं किं महग्घदा जादा, जं हत्थमेत्ता बंसकट्ठिआ अम्हेहिं हरिदव्वा । (क)

**कृष्णः**—(स्मित्वा ।) हे पीते प्रचण्डदेवि, यदि वेणुं न जहर्थास्ततः कथं तद्वार्तायां स्मितकुड्मलोल्लासादुत्फुल्लकपोलान्दोलायितदृगन्तासि ।

**मुखरा**—(साक्रोशम् ।) चपल, अहिमण्णुणो सधम्मिणी तुज्झ वन्दणिज्जा, तहवि परिहसज्जइ । (ख)

**मधुमङ्गलः**—मुहरे, एसो हं जण्णोववीअस्स सवामि । दिट्ठं मए पुहवीविलग्गसेहरेण अज्ज राहिआ वन्दिदा पिअवअस्सेण । (ग)

**मुखरा**—(सानन्दम् ।) तदो इमस्स धम्मो वड्ढिस्सदि । (घ)

(सर्वे स्मित कुर्वन्ति ।)

**मुखरा**—कण्हड, इमिणा तुज्झ चावलेण खिज्झिस्सदि बल्लइन्दो णन्दो । ता गदुअ गोमण्डलं संभालेहि । (ङ)

**कृष्णः**—आर्ये, विना वेणुं विप्रकृष्टाया धवलावलेराकृष्टिर्दुर्घटा ।

**ललिता**—कण्ह, अवलावलीणो त्ति कीस उज्जुअं ण कधेसि । (च)

**कृष्णः**—ललिते, वृद्धयाद्य सबला यूयम् । ततः कथमिदं कथयिष्यामि ।

---

(क) आर्ये, वृन्दावन इन्धनानां किं महार्घता जाता, यद्धस्तमात्रा वंशकाष्ठिकास्माभिर्हर्तव्या अपि ।

(ख) चपल, अभिमन्योः सधर्मिणी तव वन्दनीया, तदपि परिहस्यसे ।

(ग) मुखरे, एषोऽहं यज्ञोपवीतस्य शपामि । दृष्टं मया पृथ्वीविलग्नशेखरेणाद्य राधिका वन्दिता प्रियवयस्येन ।

(घ) तदैतस्य धर्मो वर्धिष्यते ।

(ङ) कृष्ण, अनेन तव चापलेन खेत्स्यति बल्लवेन्द्रो नन्दः । तद्गत्वा गोमण्डलं संभालय ।

(च) कृष्ण, अवलावलीति कस्मादृजु न कथयसि ।

---

चपलेति । वन्दनीया वन्दनयोग्या । मजेश्वरीमातुलपुत्रभार्यात्वेन तव मातुलानीसव-

**मुखरा**—(सरोषम् । संस्कृतेन ।)

नवीनाग्रे नप्त्री चटुल नहि धर्मात्तव भयं
न मे दृष्टिर्मध्येदिनमपि जरत्या पटुरियम् ।
अलिन्दात्त्वं नन्दात्मज न यदि रे यासि तरसा
ततोऽहं निर्दोषा पथि कियति हंहो मधुपुरी ॥ ९० ॥

**मधुमङ्गलः**—(सरोषम् ।) दुम्मुहि बुड्ढिए, तुज्झ कंसदो किं अम्हे भाएम्ह, जं महुपुरं आसन्नं कहेसि । (क)

**मुखरा**—(सव्याजम् ।) अरे, चिट्ठ । एसाहं णत्तिणिअं घेत्तूण राजसहं पत्थिदम्हि । (ख)

(इति राधादिभिरनुगम्यमाना निष्क्रान्ता ।)

**कृष्णः**—सखे, समागच्छ । कालिन्दीकच्छमुपेत्य गवामुद्देशं करवावः । (इति परिक्रम्य । वलितग्रीव पश्यन् । सोच्छ्वासम् ।)

मुद्रां धैर्यमयीं क्षणं विवृणुते तारल्यलक्ष्मीं(र्व्वीं) क्षणं
सोपेक्षः क्षणमातनोति भणितीरौत्सुक्यभाजः क्षणम् ।
शुद्धां दृष्टिमितः क्षणं प्रणयते प्रेङ्खत्कटाक्षां क्षणं
रोषेण प्रणयेन चाकुलितधी राधा द्विधा भिद्यते ॥ ९१ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति वेणुहरणो नाम चतुर्थोऽङ्कः ।

---

(क) दुर्मुखि वृद्धे, तव कंसात्किं वयं बिभीमः, यन्मधुपुरमासन्नं कथयसि ।

(ख) अरे, तिष्ठ । एषाहं नप्त्रीं गृहीत्वा राजसभां प्रस्थितास्मि ।

---

न्धादित्यर्थः ॥ कण्ठेति । खेलयति खेदं प्राप्यति ॥ नवीनेति । मध्येदिन [दिन]स्य मध्येऽपि । 'पारे मध्ये षष्ठ्या वा' इति समासः । कियति पथि निकट एवेति भावः । तेन मधुपुरीं गत्वा सर्वं कंसाय निवेद्य त्वा(त्वां) हि मारयामीति भीषयति ॥ इति चतुर्थोऽङ्कः ॥

वैराग्यपूर्णितातः पञ्चम्यामस्मिन् प्रातस्तनीं गानवेणु(णु)हरणादिलीलां वर्णयित्वेदानीं सांनिध्यचारादिहर्षतो गृहाग्रागमनमानभञ्जनवनविहरणादिलीलां प्रकाशयितुं पञ्चममङ्कमा-

पञ्चमोऽङ्क ।

(तत प्रविशति पौर्णमासी ।)

**पौर्णमासी—**

स्नेह शोककृशानोर्विनोदसदनं सदेति नातथ्यम् ।
स्निग्धाद्य राधिकाया यदह तेनाशु दग्धास्मि ॥ १ ॥

(पुरोऽवलोक्य ।) केयं मधुमङ्गलसङ्गिनी मामभिवर्तते । (पुनर्निभाल्य ।)

अजनितशासनभङ्गा स्थिरजङ्गममण्डलै' स्ववने ।
निखिलप्राणिरुतज्ञा विन्दति पुरत' कथं वृन्दा ॥ २ ॥

(प्रविश्य ।)

**वृन्दा मधुमङ्गलश्च**—अम्ब, वन्दे ।

**पौर्णमासी**—स्वस्ति युवाभ्याम् ।

**वृन्दा**—भगवति, कथं शोचन्त्यसि ।

**पौर्णमासी**—वत्से, विदग्धपुगवस्याङ्कसगमलक्ष्माणि राधिकायाम भिलक्ष्य मन्युमानभिमन्यु. संप्रति मधुपुर्यां सकुटुम्बो वस्तुमुत्कण्ठते । तत्रापि तदम्बा तदीर्ष्याजम्बालावलीजृम्भाया कादम्बिनीभावमालम्ब्य राधामरालीमुद्वेजयति । तेनाद्य शोचामि ।

**वृन्दा**—पौर्णमासीशुभाशीश्चन्द्रिकैव विघ्नान्धकारसहारिणी ।

**मधुमङ्गलः**—अज्जे, कह राहोपरि तुज्झ वरिट्ठं पेम्मम् । (क)

**पौर्णमासी**—वत्स, सत्यपि भूरिणि प्रेमोदयकारणे तस्यामनन्यापेक्षि ममेदं प्रेम ।

---

(क) आर्ये, कथ राधोपरि तव वरिष्ठ प्रेम ।

---

रभते—ततः **प्रविशतीत्यादिना** ॥ **स्नेह इति** । स्नेह प्रेम, तिलादिरसश्च । कृशानु रग्नि ॥ **अजनितेति** । स्ववने वृन्दावने स्थावरजङ्गमैर्न जनित आज्ञाभङ्गो यस्या ॥ **वत्सेति** । तदम्बा जटिला । तस्या राधाया या ईर्ष्या सभोगदर्शनादिचिह्नेन क्षान्ति सैव जम्बालावलि पङ्कसमूहस्तस्य जृम्भायामाविर्भावनिमित्ते कादम्बिनीभाव मेघमालालमा

वृन्दा—युक्तमिदम् । यतः ।

> जगति किल विचित्रे कुत्रचिन्निश्चलात्मा
> भवति निरभिसंधिः कस्यचित्प्रेमबन्धः ।
> विलसति समुदीर्णे कुम्भजे खञ्जनाली
> कलितवति तथास्तं हन्त नाशं प्रयाति ॥ ३ ॥

मधुमङ्गलः—केरिसं णिरहिसंधिणो पेम्मस्स चिण्हम् । (क)

पौर्णमासी—

> स्तोत्रं यत्र तटस्थतां प्रकटयच्चित्तस्य धत्ते व्यथां
> निन्दापि प्रमदं प्रयच्छति परीहासश्रियं बिभ्रती ।
> *दोषेण क्षयितां गुणेन गुरुतां केनाप्यनातन्वती*
> प्रेम्णः स्वारसिकस्य कस्यचिदियं विक्रीडति प्रक्रिया ॥ ४ ॥

मधुमङ्गलः—एव्वं रूवं क्खु दोण्णं राहामाहवाणं पेम्म । (ख)

पौर्णमासी—वत्स, किमुच्यते । माधुर्यसंसर्गिणो नैसर्गिकस्य परस्परसुलभानां विदग्धमिथुनानां प्रेमशृङ्खलबन्धस्य परमोत्कर्षरेखायां दृष्टान्तः किल राधामाधवयोर्गाथामृतभूमा ।

वृन्दा—भगवति, श्रूयताम् ।

> यष्टिं वष्टि न पाणिना कलयितुं शृङ्गे न सङ्गार्थिता
> धत्ते धातुभिरङ्गमण्डनमयीं नाङ्गीकरोति श्रियम् ।

---

(क) कीदृशं निरभिसंधिनः प्रेम्णश्चिह्नम् ।
(ख) एवं रूपं खलु द्वयो राधामाधवयो प्रेम ।

पर्णं वादयते न घूर्णितमनास्तीरे कृतान्तस्वसुः
किंतूत्क्राम्यति मुक्तविभ्रमगुणग्रामोऽद्य दामोदरः ॥ ९ ॥

**पौर्णमासी**—(सखेदम् ।) किमिदम् ।

**मधुमङ्गलः**—ललिदा कौडिल्लेण । (क)

**पौर्णमासी**—नूनं ललितया हठानुवर्तितमाना वर्तते राधा ।

**वृन्दा**—अथ किम् ।

**पौर्णमासी**—न जाने क्व खल्वद्य ललितादयः ।

**वृन्दा**—तासामुद्देशाय मया सुबलः प्रेषितोऽस्ति ।

(प्रविश्य ।)

**सुबलः**—अज्जे, वन्देमि । (ख)

**पौर्णमासी**—सुबल, क्व दृष्टा राधादयः ।

**सुबलः**—मुहराघरोवान्तवट्टिणो रसालस्स मूले । (ग)

**पौर्णमासी**—वत्स मधुमङ्गल, तूर्णमनुसृत्य राधिकामभिसारयन्त्यसि। तदेतया सूक्तिचन्द्रिकया त्वमानन्दय मुकुन्दम् ।

(मधुमङ्गलः सहर्षं निष्क्रान्तः ।)

**वृन्दा**—(जनान्तिकम् ।) सुबल, मया समर्पितं पद्यं त्वया किं नाम विशाखायां संचारितम् ।

**सुबलः**—अध इं । (घ)

**पौर्णमासी**—वृन्दे, यावत्प्रसाद्य प्रसाध्य च राधां संचारयामि तावदधुनादाभ्यां पुरः कदम्बनिकुञ्जे विश्राम्यताम् ।

(वृन्दा सुबलेन सह निष्क्रान्ता ।)

**पौर्णमासी**—(परिक्रम्य ।) कथं ललितेयमायाति ।

---

(क) ललिता कौटिल्येन ।

(ख) आर्ये, वन्दे ।

(ग) मुखराग्रहोपान्तवर्तिनो रसालस्य मूले ।

(घ) अथ किम् ।

(प्रविश्य।)

**ललिता**—भअवदि, तुम्ह सआसं गच्छन्ती म्हि। (क)

**पौर्णमासी**—किमर्थम्।

**ललिता**—अज्जे, तिणा धुत्तेण पुणो पुणो अवरज्झिदा पिअसही लाहवं अमणिअ सुट्ठु उक्कण्ठेदि। ता किं करिस्सम्। (ख)

**पौर्णमासी**—वत्से, मुञ्च मुधाकालुष्यम्। नापराध्यति माधवः। किंतु मधुमङ्गलप्रमादितैव वः खेदाय बभूव।

**ललिता**—(स्वगतम्।) मम वि एव्वं णन्दीमुहिए कथिदम्। (प्रकाशम्।) अज्जे, पेक्ख एषा राही रसालस्स मूले कम्पन्ती किंपि जप्पदि। (ग)

(ततः प्रविशति सानुतापं राधा।)

**राधा**—(संस्कृतेन।)

कर्णान्ते न कृता प्रियोक्तिरचना क्षिप्तं मया दूरतो
मल्लीदाम निकामपथ्यवचसे सख्यै रुषः कल्पिताः।
क्षोणीलग्नशिखण्डशेखरमसौ नाभ्यर्थयन्नीक्षितः
स्वान्तं हन्त ममाद्य तेन खदिराङ्गारेण दंदह्यते॥ ६॥

**पौर्णमासी**—पुत्रि, प्रच्छन्नमुपसृत्य शृणुवः प्रेमविलासम्।

(इत्युभे तथा स्थिते।)

**राधिका**—(सचापलम्। पुनः संस्कृतेन।)

धन्यास्ता हरिणीदृशः स रमते याभिर्नवीनो युवा

---

(क) भगवति, तव सकाशं गच्छन्त्यस्मि।

(ख) आर्ये, तेन धूर्तेन पुनः पुनरपराधिता प्रियसखी लाघवममत्वा सुष्टूत्कण्ठयति। तत्किं करिष्यामि।

(ग) ममाप्येवं नान्दीमुख्या कथितम्। आर्ये, पश्यैषा राधा रसालस्य मूले कम्पमाना किमपि जल्पति।

---

कर्थयितुं न यदि न याभयते। श्लक्ष्णे सहार्थिता न धत्ते॥ तिणेति। अपराधिता अपमानिता॥ कर्णान्त इति। निकाम पथ्यं वचो यस्याः एवंभूतायै सख्यै प्रिया-गायै। अभ्यर्थयन्निति। 'अर्थ याचने' इत्यस्मात्मनेपदिनोऽपि परस्मैपदप्रयोगः। दद-ह्यतेऽतिशयेन दह्यते॥ धन्या इति। चारुत्वादीनां ...पञ्चम॥ ह-

(पुनः सशङ्कम् ।)

स्वैरं चापलमाकलय्य ललिता मां हन्त निन्दिष्यति ।

(पुनः सौत्सुक्यम् ।)

गोविन्दं परिरब्धुमिन्दुवदनं हा चित्तमुत्कण्ठते

(पुनः सामर्षम् ।)

धिग्वामं विधिमस्तु येन गरलं मानाभिधं निर्ममे ॥ ७ ॥

**ललिता**—अदक्खिणे, चिट्ठ । सअं जेव कण्हं णिराकदुअ भङ्गिए मे दूसेसि । (क)

**राधिका**—(भृङ्गीमवेक्ष्य । संस्कृतेन ।)

कृमिरपि नमितात्मा हन्त वृन्दावनेऽसि-
न्कलयति निजमौलौ बर्हमौलेर्निदेशम् ।
अनुनयति मुहुर्मां नेतुकामालिनीयं
यदमलमधुरोक्तिस्तस्य दृष्टिं शठस्य ॥ ८ ॥

**पौर्णमासी**—(सनर्मस्मितम् ।) निखिलमेव वृन्दाटवीप्राणिवृन्दं दूतीभूतमियं मन्यते महामानिनी ।

**राधिका**—(प्रेमावेशं नाटयन्ती । सचमत्कारम् ।) कधं एसो मं मोट्टिमं परिरद्धुं उवसण्णो कण्हो । (ख)

**पौर्णमासी**—गम्भीरानुरागविवर्तोऽयम्, यदस्यां माधवस्य विस्फुरणम् ।

**राधिका**—(सहुङ्कारं पराहृत्य ।) हन्त भो वङ्ककलासालि, चन्दाअलीकोडचिरासङ्गभङ्गुरकुरङ्ग, अवेहि । एसो तुमं परिभविस्ससि मए । (ग) (इति धर्णोत्पलं क्षिपन्ती । संस्कृतेन ।)

---

(क) अदक्षिणे, तिष्ठ । स्वयमेव कृष्णं निराकृत्य भङ्ग्या मां दूषयसि ।

(ख) कथमेष मां बलात्कारेण परिरब्धुमुपगतः कृष्णः ।

(ग) हन्त भो वक्रकलाशालिन्, चन्द्रावलीक्रोडचिरासङ्गभङ्गुरकुरङ्ग, अपेहि । एष त्वं परिभविष्यसि मया ।

---

निरपीति । तस्य शठस्य दृष्टिं नेतुकामेयमलिनी ॥ परेति । परां कोटिं परमुत्कर्षम् ॥

यमुनातीरकदम्बाः संप्रति मम हन्त साक्षिणो यूयम् ।
एष बलान्मामबलां गोकुलधूर्तः कदर्थयति ॥ ९ ॥

**पौर्णमासी**—ललिते, परां कोटिमधिरूढा राधिकोत्कण्ठा । तदियं त्वरितमभिसार्यताम् ।

**ललिता**—(परिक्रम्य ।) हला राहि, एक्का ज्जेव किं मन्तेसि । (क)

**राधिका**—(ललितामालोक्य । स्वगतम् ।) कधं सच्चं ज्जेव एक्कम्हि, जं कण्हो ण दीसइ । (इति सौत्सुक्यम् ।) हला ललिदे,

परतणुपवेसविज्जा कहमिह सामेण कामिणा पढिदा ।
मम हिअए माणण्णी पविसिअ णिव्वाविदो जेण ॥ १० ॥ (ख)

(प्रविश्य ।)

**विशाखा**—हला, सुबलहत्थादो लद्धा इअं पत्तिआ । (ग)

**ललिता**—(गृहीत्वा वाचयति ।)

मेध्योऽपि माधविकया मधुपो यदेष
क्षिप्तः स्वयं प्रचलता नवपल्लवेन ।
तस्याः खलु क्षतिरियं सुषमाक्षयेण
नन्दत्ययं तु विरुवन्नरविन्दिनीषु ॥ ११ ॥

**राधिका**—(सविषादम् । संस्कृतेन ।)

अजनि विमुखः शङ्के पङ्केरुहाक्षि विचक्षणो
मयि मधुरिपुर्दोषश्रेणीविहारवनश्रियाम् ।

---

(क) हला राधे, एकैव किं मन्त्रयसि ।
(ख) कथं सत्यमेवैकास्मि, यत्कृष्णो न दृश्यते । हला ललिते,
परतनुप्रवेशविद्या कथमिह श्यामेन कामिना पठिता ।
मम हृदये मानाग्निः प्रविश्य निर्वापितो येन ॥
(ग) हला, सुबलहस्ताल्लब्धेयं पत्रिका ।

---

हलेति । वृन्दया प्रेषितेति शेषः ॥ मेध्य इति । मेध्यः पवित्रः दोषरहितः । तां विलम्बमानामारोपयितुमिति यावत् । नवपल्लवेन नवरसपानीयेन । नन्दत्ययमिति । मधुपं विना माधव्याः शोभैव न भवति । मधुपस्य तु माधवीं विनान्यत्र विन्दिनीषु परमानन्दो भवत्येवेत्यर्थः ॥ अजनीति । मयि मधुभृतायाम् । दोषश्रेणीनां विहारवनश्रीरूपायां दोषश्रेण्यां विहरति

अकलितरसः सूचीविद्धो रजः प्रसरान्धधी-
　ने मधुपयुवा किं केतक्यां विरक्तिमुपैष्यति ॥ १२ ॥

(इति वैक्लव्यं नाटयति ।)

**पौर्णमासी**—नहि चन्द्रेण चन्द्रिकाया मोक्षः कदापि संभवति ।

**विशाखा**—हला, समास्सस । तुह उक्कण्ठिदं तक्किअ मए कण्हपउत्तिं विण्णादुं णन्दीमुही पेसिदत्थि । (क)

(प्रविश्य ।)

**नान्दीमुखी**—(संस्कृतेन ।)

मृदुरपि निसर्गतस्त्वं कथमार्द्रे माधवे कठोरासि ।
अथवा नवनीतपुटी हिमद्रवे कक्खटा प्रैक्षि ॥ १३ ॥

**राधिका**—हला, अवि णाम सुहं वट्टदि माहवो । (ख)

**नान्दी**—(संस्कृतेन ।)

क्षणमपि न सुहृद्भिर्नर्मगोष्ठीं विधत्ते
　रचयति न च चूडां चम्पकानां चयेन ।
परमिह मुरवैरी योगिवन्मुक्तभोग-
　स्तव सखि मुखचन्द्रं चिन्तयन्निर्वृणोति ॥ १४ ॥

**राधिका**—(विशाखा परिष्वज्य । संस्कृतेन ।)

भूयो भूयः कलिविलसितैः सापराधापि राधा
　श्लाघ्येणाहं यदघरिपुणा बाढमङ्गीकृतास्मि ।
तत्र क्षामोदरि किमपरं कारणं वः सखीनां
　दत्तामोदां प्रगुणकरुणामञ्जरीमन्तरेण ॥ १५ ॥

---

(क) सखि, समाश्वसिहि । तव उत्कण्ठां तर्कित्वा मया कृष्णप्रवृत्तिं विज्ञातुं नान्दीमुखी प्रेषितास्ति ।

(ख) सखि, अपि नाम शुभं वर्तते माधवः ।

---

अवकाश ल'''इति यावत् । एतदेवार्थान्तरन्यासेनाह—अकलितरस इति । प्रसरः समूहः ॥ **मृदुरपीति** । कक्खटा । कठिनीत्यर्थः ॥ **क्षणमपीति** । निर्वृणोति सुखं प्राप्नोति ॥ **भूय इति** । कलिविलसितैः कलहविलासहेतुभिः सापराधा अत एव राध्यतीति राधा । वो युष्माकं सखीनां प्रगुणकरुणमञ्जरीमन्तरेण विना किमपरं कारणमस्ति । किंभूताम् । दत्तामोदाम् । मत्प्रेयसीनां विशाखादीनामस्यां कारुण्यमस्तीति बुद्ध्वा कृष्णो मां

(नेपथ्ये ।)

गर्वोदग्राः कलमविकलं तन्वतामन्यपुष्टा
निष्प्रत्यूहं मृगयुवतयः शस्यमास्वादयन्तु ।
सीमन्तिन्यो गृहनयमयीं शीलयन्तु प्रणालीं
धूर्तो वेणुर्विहरति करे नाथ पीताम्बरस्य ॥ १६ ॥

राधा—(वंशीमुद्वाक्ष्य । सोपालम्भम् ।)

सद्वंशतस्तव जनिः पुरुषोत्तमस्य
पाणौ स्थितिर्मुरलिके सरलासि जात्या ।
कस्मात्त्वया सखि गुरोर्विषमा गृहीता
गोपाङ्गनागणविमोहनमन्त्रदीक्षा ॥ १७ ॥

विशाखा—हला, अच्चरिआ इअं वंशी, जं मारुदाहिमुहीकिदा सअं सद्दाएदि । (क)

राधिका—सहि, परिक्खिस्सम् । (ख) (इति तथा करोति ।)

विशाखा—सुणिज्जउ महुरा काअली । ललितं वेरेहिमासुणोदु कण्हस्स परिवारः । (ग)

(प्रविश्य ।)

वृन्दा—(प्रच्छन्नम् ।) भगवति, न कदापि वंशी देयेति श्रुतं मया ललितादुर्मन्त्रितम् ।

पौर्णमासी—वत्से, युक्तिमायत्यां करिष्यामि ।

(क) सखि, आचार्येयं वंशी, यन्मारुताभिमुखीकृता स्वयं शब्दायते ।

(ख) सखि, परीक्षिष्ये ।

(ग) श्रूयतां मधुरा काकली । ललितं यस्माच्छृणोतु कृष्णस्य परिवारः ।

प्रति कदाचित्त्वयां करोमीत्यर्थः ॥ गर्वोद्ग्रा इति । वृन्दावचनम् । गर्वेणोद्ग्रा उप-
ताराः सन्तः अन्यपुष्टाः कोकिलाः । निष्प्रत्यूहं निर्व्यूहम् । शस्य(स्य) पानम् । सी-
मन्तिन्यः स्त्रियः । गृहनीतिमयीं प्रणालीं शीलयन्तु ॥ सद्वंशेति । कस्माद्गुरोः सकाशा-
द्दीक्षा गृहीता तस्य नाम वद तेनैवानर्थः कृतः । ननु(नु) तव कोऽपि दोष इत्यर्थः ।
कस्मात्कारणादिति वा ॥ चरम इति । आयत्यामुत्तरकाले । 'उत्तरः काल आयतिः' इत्य-

(प्रविश्य।)

जटिला—णूणं इध कण्हेण मिलिदं जं मुरली वादिदा। (विलोक्य।) अवो, कहं वासहाणवीहत्थे कण्हस्स वंशी। ता णिण्हुदं गदुअ णं गेहिस्सम्। (इति सहसोपसृत्य सामर्षम्।) अयि दुव्विणीदगोआलपुत्तिए, मुञ्च मुरलिअम्। (क) (इत्याकृष्य गृह्णाति।)

ललिता—(अपवार्य।) हद्धी, पमादो। कधं वुड्ढिआ अतक्किदं मुरली आअड्ढिदा। (ख)

जटिला—णं क्खु भअवदीए पौर्णमासीए दंसइस्सम्, जा मज्ज भणिदं ण पत्तिआएदि। (ग)

पौर्णमासी—पुत्रि वृन्दे, गहनं कष्टमापतितम्। पश्य जटिला ममोटजदिशं प्रयाति।

वृन्दा—भगवति, मा चिन्तय। क्षिप्रमसौ मुरलीं लुण्ठयामि। (इति निष्क्रान्ता।)

ललिता—(सभयमनुसृत्य।) अज्जे, कीस अलीअं सङ्कसि, जं एसा कालिन्दीकूलम्हि अम्हेहि लद्धा। (घ)

जटिला—(सरोपम्।) चवले दुम्मन्तिणि, चिट्ठ चिट्ठ। (ङ)

(प्रविश्य।)

सुवलः—अज्जे जडिले, पेक्ख दहिलम्पडा मक्कडी तुज्झ घरं पविसइ। (च)

---

(क) नूनमितः कृष्णेन मिलितं यन्मुरली वादिता। अहो, कथ वार्षभानवीहस्ते कृष्णस्य वंशी। तन्निभृतं गत्वा एनां गृहीष्यामि। अयि दुर्विनीतगोपालपुत्रिके, मुञ्च मुरलिकाम्।

(ख) हा धिक्, प्रमादः। कथं वृद्धया अतर्कितं मुरली आकृष्टा।

(ग) एनां खलु भगवत्यै पौर्णमास्यै दर्शयिष्यामि, या मम भणितं न प्रत्येति।

(घ) आर्ये, कस्मादलीकं शङ्कसे, यदेषा कालिन्दीकूलेऽस्माभिर्लब्धा।

(ङ) चपले दुर्मन्त्रिणि, तिष्ठ तिष्ठ।

(च) आर्ये जटिले, पश्य दधिलम्पटा मर्कटी तव गृहं प्रविशति

जटिला—(साचिग्रीवमालोक्य ।) सुवल, सच्चं कहेसि । मक्खणचोरिणी एसा मक्कडी । (क) (इति परावृत्य धावन्ती निष्क्रान्ता ।)

पौर्णमासी—नूनं वृन्दया प्रेरितास्ति कक्खटीयं नाम जरन्मर्कटी ।

सुबलः—णन्दीमुहि, पेक्ख । पक्खित्तेण वेणुणा मूढजडिलाए मक्कडी ताडिदा । (ख)

पौर्णमासी—(सहर्षम् ।) दिष्ट्या मुरलीमादाय कक्खटीयं कदम्बमधिरूढा ।

(सर्वाः सहर्षं नाटयन्ति ।)

(प्रविश्य ।)

जटिला—हद्धी वच्छ सुबल, हत्थादो मे मुरली गदा । ता तुज्झ णिम्मन्छणं जामि । समप्पेहि मे वंसिअम् । (ग)

सुबलः—अज्जे, जहत्थणामा एसा कक्खटी केअलं तुज्झ बहिणीपुत्तादो विसालादो भाएदि । ता गोवड्ढणसिङ्गे सेलन्तं णं गदुअ अब्भत्थेहि । (घ)

(जटिला निष्क्रान्ता ।)

पौर्णमासी—दिष्ट्या व्याजेन जरतीं दूरमपसार्य धूर्तोऽयं भ्रूविभ्रमेण ललिता त्वरयति ।

ललिता—(नेत्रप्रान्त घूर्णयन्ती ।) हला राहि, एहि । वेणुं मग्गम्हे । (ङ)

राधिका—(स्वगतम् ।) दिट्ठिआ अहिसारेदि मम् । (च)

---

(क) सुबल, सत्यं कथयसि । नवनीतचौरिण्येषा मर्कटी ।

(ख) नान्दीमुखि, पश्य । प्रक्षिप्तेन वेणुना मूढजटिलया मर्कटी ताडिता ।

(ग) हा धिक् वत्स सुबल, हस्तान्मे मुरली गता । तस्मात्तव निर्मन्छनं यामि । समर्पय मे वंशिकाम् ।

(घ) आर्ये, यथार्थनामा एषा कक्खटी केवलं तव भगिनीपुत्राद्विशालाद्बिभेति । तद्गोवर्धनशृङ्गे शैलान्तमेनां गत्वाभ्यर्थय ।

(ङ) हला राधे, एहि । वेणुं मार्गयाव ।

(च) दिष्ट्याभिसारयति माम् ।

(प्रतिहस्तापटीक्षेपेण ।)

**मुखरा**—विसाखे, अहिमण्णु संदिसइ—अज्ज जोइसिआणं उपदेसेण मए गोमङ्गला णाम चण्डी पूअणीज्जा । ता पूअणोपहारं घेतूण तुमं चेत्तरुक्खस्स तले राहिअं लम्भय त्ति । (क)

**राधिका**—(सखेदमपवार्य ।) हन्त, दुद्देअस्स पाडिउल्लम् । (ख) (इति ललितामुखमीक्षते ।)

**ललिता**—हला, सच्चणामा एसो अहिमण्णु । ता गदुअ पूअणोवहारं संपादेह्म । (ग)

(इति सर्वा निष्क्रान्ताः ।)

**पौर्णमासी**—(सुबलमनुसृत्य सव्यथम् ।) वत्स, दुःसमाधानेयं गतिरुपस्थिता । तदद्य वृन्दया सह गत्वा समाश्वस्यतां त्वया पाटवेन पुण्डरीकाक्षः । मया तु प्रामाणिकपुरंध्रीणां गोष्ठीमासाद्य जटिलाकौटिल्यं वर्णयिष्यते । (इति निष्क्रान्ता ।)

**सुबलः**—(परिक्रम्य ।) एसा तमालतले डाहिणहत्थे गहीदवंसिआ वुन्दा चिट्ठइ । (घ)

(प्रविश्य ।)

**वृन्दा**—भोः सुबल, विलोकितसर्वार्थासि । तदलं तद्वार्तया ।

**सुबलः**—वुन्दे, तुरिअं एहि । वेणुं जेव्व उवहरह्म । (ङ)

(इत्युभौ परिक्रामतः ।)

**सुबलः**—वुन्दे, महुमङ्गलेण वड्ढिदुक्कण्ठो पिअवअस्सो मग्गं ज्जेअ

(क) विशाखे, अभिमन्युः संदिशति—अद्य ज्योतिषिकानामुपदेशेन मया गोमङ्गला नाम चण्डी पूजनीया । तत्पूजनोपहारं गृहीत्वा त्वं चैत्यवृक्षस्य तले राधिकां लम्भयेति ।

(ख) हन्त, दुर्दैवस्य प्रातिकूल्यम् ।

(ग) हला, सत्यनामा एषोऽभिमन्युः । ततो गत्वा पूजनोपहारं संपादयामः ।

(घ) एषा तमालतले दक्षिणहस्ते गृहीतवंशिका वृन्दा तिष्ठति ।

(ङ) वृन्दे, त्वरितमेहि । वेणुमेवोपहरावः ।

मरः ॥ अहो इति । अहो इति विस्मये ॥ विशाखे इत्यादि । लम्भय प्रापय ॥ दिशा वेणुमार्गोपदेशेन ॥ सत्यनामा इत्यादि । सत्यनामा अभि सर्वतोभावे

पेक्खन्तो चिट्ठइ। ता ण जाणे अकिदत्थाणं अह्माणं तत्थ गमणे का तस्स दसा भवे। (क)

वृन्दा—सुबल, सत्यं ब्रवीषि। पश्यायं पुंनागतरोरुपकण्ठे समुत्कण्ठते कंसारिः।

सुबलः—वुन्दे, भणामि। चिन्तेहि जुत्तिम्। (ख)

वृन्दा—(विमृश्य।) सुबल, गोविन्दस्य क्षणविनोदाय चिन्तितोपायास्मि। तदेहि। तन्निष्पत्त्यै वेशं भजावः।

(इति निष्क्रान्तौ।)

(ततः प्रविशति मधुमङ्गलेनोपास्यमानः कृष्णः।)

कृष्णः—(सौत्सुक्यम्।)

राधा पुरः स्फुरति पश्चिमतश्च राधा
राधाधिसव्यमिह दक्षिणतश्च राधा।
राधा खलु क्षितितले गगने च राधा
राधामयी मम बभूव कुतस्त्रिलोकी॥ १८॥

मधुमङ्गलः—पिअवअस्स, भअवदीए अहिसारिदं दाणिं ज्जेव पेक्खिस्ससि राहिअम्। (ग)

कृष्णः—

करेणान्तस्तुष्ट्या सललितमवष्टभ्य ललिता-
कराङ्गुष्ठं राधा भृशमभिसरन्ती सरभसम्।
किमद्य स्मेराक्षी स्मरपरिमलोल्लासिवलय-
ध्वनिर्मां निर्मास्यत्यनुपमचमत्कारचटुलम्॥ १९॥

मधुमङ्गलः—भो, मा उत्तम्मस्स। कङ्कणझणआरो सुणइ। (घ)

---

(क) वृन्दे, मधुमङ्गलेन वर्धितोत्कण्ठः प्रियवयस्यो मार्गमेव पश्यंस्तिष्ठति। तन्न जानेऽकृतार्थानामस्माकं तत्र गमने का तस्य दशा भवेत्।

(ख) वृन्दे, भणामि। चिन्तय युक्तिम्।

(ग) प्रियवयस्य, भगवत्याभिसारितामिदानीमेव प्रेक्षिष्यसे राधिकाम्।

(घ) भो, मा उत्ताम्यस्व। कङ्कणझणत्कारः श्रूयते।

---

मन्युपंक्ति र तथा॥ करेणेति। निर्मास्यति। [illegible] करिष्यति॥ नेपथ्ये राधिकावेशधारी

(नेपथ्ये ।)

हला ललिदे, पेक्ख । सो एसो पुण्णाअरुक्खो दीसइ । (पुनस्तत्रैव ।) सहि राहे, धिट्ठभमरझम्पिदं पेक्ख णम् । ता क्खणं इध ज्जेव चिट्ठम्ह । (क)

मधुमङ्गलः—(सचापलम् ।) भो पिअवअस्स, वामदो किं ण पेच्छसि । एसा ललिदाए सद्धं राहिआ समाअदा । (ख)

कृष्णः—(सोत्कण्ठम् ।) दिष्ट्या साक्षादद्य मदीक्षणयोः सौख्यं विस्तार्येते सख्या ।

मधुमङ्गलः—(सगर्वम् ।) भो, कीस ण वित्थारिदव्वं जत्थ अहं विअद्धो दूदो म्हि । (ग)

कृष्णः—सखे, पुरःस्थयोरपि मत्प्रिययोरव्यलीकता नाद्याप्यवधारिता । यदाभ्यां न संनिधीयते ।

मधुमङ्गलः—पिअवअस्स, सुट्ठु पसण्णं राहीं जाणाहि । जं साडिअञ्चलझम्पिदा मुरली झलकइ । (घ)

कृष्णः—(सस्नेहम् ।)

विधुरेति दिवा विरूपतां शतपत्रं बत शर्वरीमुखे ।
इति केन सदा श्रियोज्ज्वलं तुलनामर्हति मत्प्रियाननम् ॥ २० ॥

*(इति सकौतुकमनुसर्पति ।)*

---

(क) हला ललिते, पश्य । स एष पुन्नागवृक्षो दृश्यते । सखि राधे, धृष्टभ्रमरचालित पश्यैनम् । तत्क्षणमिहैव तिष्ठाव ।

(ख) भो प्रियवयस्य, वामतः किं न पश्यसि । एषा ललितया सार्धं राधिका समागता ।

(ग) भो, कस्मान्न विस्तारयितव्य यत्राहं निदग्धो दूतोऽस्मि ।

(घ) प्रियवयस्य, सुष्ठु प्रसन्ना राधा जानीहि । यत्शाटिकाञ्चलाच्छादिता मुरली झलकति ।

---

मुखरा ललितावेशधारिणी वृन्दामाह—हला ललिदे इति । दिष्ट्ये इति । सख्या राधयेति कृष्णविवक्षितम् । वस्तुतस्तु सख्या मुखरेण । श्रीकृष्णवाक्यस्यान्यथाप्रयोगासंभवात् ॥ सखे इति । मत्प्रिययो राधाललितयो । वस्तुतस्तु वृन्दामुखयो । अव्यलीकता प्रीति ।

(नेपथ्ये ।)

वारिसहाणइ लच्छी इअं पुरो राइणी समुग्गमइ ।
चन्दाअलीकुडुम्बअचओर मा धाअ सुप्पसहम् ॥ २१ ॥ (क)

मधुमङ्गलः—ललिदे, भमिदासि । ण क्खु चओरो । पेक्ख एसो रहङ्गीरमणो, जेण वारिसहाणइ लच्छी कामिज्जइ । (ख)

(नेपथ्ये पुनरन्यतः ।)

भो कण्ह, सुणाहि । (ग)

मधुमङ्गलः—(विलोक्य सशङ्कम् ।) एसा डाहिणे विसालस्स बहिणी सारङ्गी णाम बालिआ । (घ)

कृष्णः—सखे, मा शङ्किष्ठाः । सुष्ठु बालिकेयम् ।

(प्रविश्य ।)

सारङ्गी—भो कण्ह, सुणाहि । वुड्ढिआ मुहला भणादि—कीस तुए मम णत्तिणी अलीअं दूसिज्जइ । जं तुज्झ वंसिआ अह्मेहि कक्खलिआ-हत्थे दिट्ठा, ता मा गोहि णं ति । (ङ)

---

(क) वार्षभानवी लक्ष्मीरियं पुरो रागिणी समुद्गच्छति ।
चन्द्रावलीकुटुम्बचकोर मा धाव सुप्रसभम् ॥

(ख) ललिते, भ्रान्तासि । न खलु चकोरः । पश्यैष रथाङ्गीरमण., येन वार्षभा-नवी लक्ष्मीः काम्यते ।

(ग) भोः कृष्ण, शृणु ।

(घ) एषा दक्षिणे विशालस्य भगिनी सारङ्गी नाम बालिका ।

(ङ) भोः कृष्ण, शृणु । वृद्धा मुखरा भणति—कस्मात्त्वया मम नप्त्री मिथ्या दूष्यते । यत्तव वंशिकास्माभिः कक्खटिकाहस्ते दृष्टा, तमान्मा······मेनामिति ;

---

वस्तुतश्चन्द्रावल्याः गलन्तम् । 'व्यलीकं त्वप्रियेऽनृते' इत्यमरः ॥ वारिसेति । वार्ष-भानवी लक्ष्मीः वृष(राशि)स्थभानुसंबन्धिनी शोभा । वृषभानोः कन्यायाश्च शोभा । रागिणी, रश्मियुक्ता, राग. शोभायुक्ता च । वस्तुतस्त्वनुरागवती च । चन्द्रावल्याः कुटुम्ब-चकोरस्य कृष्णस्यापरेऽप्यत्र धावन तत्र दुःखदमेव भविष्यतीत्यर्थः ॥ ललिदे इत्यादि । रथाङ्गीरमणश्चक्रवाकः, पक्षे रथाङ्गं चक्रं तद्युक्तः रमणो यस्याः पक्षान्तरेण वार्षभानवी लक्ष्मीः काम्यते । शेषार्थः स्पष्टः ॥ वुड्ढिआ इत्यादि । ············दृष्टमात्र-

**कृष्णः**—सारङ्गिके, विज्ञापय मुखरां यदहं लब्धमुरलीकोऽस्मि ।

(नेपथ्ये ।)

हला, पच्छन्ना होहि । (क)

**सारङ्गी**—(नेपथ्याभिमुखमवलोक्य । सेर्ष्यम् ।) हला राहिए, चेत्तरुक्खस्स तले तुमं विदुदि आआलेदि मे भादुओ । ता तत्थ किंति ण गदासि । (ख)

(नेपथ्ये ।)

हदासे साहासारङ्गमुहि सारङ्गिए, तुमंपि दुदिआ जडिला संवुत्ता । ता वुड्ढसद्दूलस्स तुण्डकोडरे पडेहि । (ग)

**सारङ्गी**—(सामर्षम् ।) ललिदे, उलङ्घिअ मं जेव्व तुमं तज्जसि । ता अहं गदुअ माउसिआए जडिलाए विण्णविस्सम् । (घ) (इति निष्कान्ता ।)

**मधुमङ्गलः**—(सावज्ञम् ।) जादु णाम बालिआपलावे कस्स वीसम्भो । (ङ)

(नेपथ्ये ।)

सखि राहे, मुञ्च मुञ्च । सुणाहि संकिदेण किं भणेदि ललिदा । (च)

(पुनर्नेपथ्ये ।)

किं तस्करी युवतिमानधनस्य वंशी-
मङ्के करोपि विकिर त्वरया विदूरे ।

---

(क) सखि, प्रच्छन्ना भव ।

(ख) हला राधिके, चैत्यवृक्षस्य तले त्वां······आकारयति मम भ्राता । तस्मात्तत्र किमिति न गतासि ।

(ग) हताशे शाखासारङ्गमुखि सारङ्गिके, त्वमपि द्वितीया जटिला संवृत्ता । तस्माद्वृद्धशार्दूलस्य तुण्डकोटरे पत ।

(घ) ललिते, अपराधं कुर्वती मामेव त्वं तर्जयसि । तदहं गत्वा मातृष्वस्रे जटिलायै विज्ञापयिष्यामि ।

(ङ) जातु नाम बालिकाप्रलापे कस्य विश्रम्भः ।

(च) सखि राधे, मुञ्च मुञ्च । शृणु सङ्केतेन किं भणति ललिता ।

---

भूर्धि गम्यते ॥ ललितावेशधरा वृन्दा वदति—हलेति । बाल्यभावोक्तिरियम् । भ्राता । अभिमन्युरित्यर्थः ॥ हदासे इति । शाखासारङ्गो वानरस्तस्य मुखमिव मुखं यस्या हे

एषा प्रयातु वनिताम्बरतस्कराय
योग्येन सङ्गमिह गच्छतु वस्तु योग्यम् ॥ २२ ॥

**कृष्णः**—(स्मित्वा ।) सखे, पश्येयमञ्चलाद्वंशी बलादिवाकृष्य पुरस्ताच्चिक्षेप । तदिमां गृहाण ।

(मधुमङ्गलस्तथा करोति ।)

(नेपथ्ये दूरतः ।)

अम्मा, सारङ्गीए असच्चं ण भणिदम् । (क)

**कृष्णः**—(सव्यथम् ।) सखे, पश्य । पुरो निष्ठुरेयमुपस्थिता जरती ।

**मधुमङ्गलः**—हन्त, साअणकसुनभुअङ्गीव कूरमुही एसा रोसावेसेण लट्ठिं खिवन्ती परुसं गज्जइ जडिला । (ख)

(नेपथ्ये ।)

भो दुकुलाङ्गारधूमलेह, पच्चहं वच्चेसि दाणिं का पउत्ती । (ग)

**मधुमङ्गलः**—हद्धी । कअलीव्व कम्पइ राहिआ । (घ)

(नेपथ्ये ।)

अज्जे, पसीद । ण क्खु अह्मे अवरज्झह्म । (ङ)

**मधुमङ्गलः**—पेक्खिअ राहिअं हत्थे घेत्तूण ललिदाए समं पत्थिदा वुड्ढिआ (च)

**कृष्णः**—(सखेदम् ।) सखे, न जाने किमद्य प्रतिपद्यते कठोरेयं जटिला । तदुपसृत्य तत्त्वमवधार्यताम् ।

(मधुमङ्गलो निष्क्रान्तः ।)

---

(क) अम्मा, सारङ्गया असत्यं न भणितम् ।

(ख) हन्त, श्रावणकृष्णभुजङ्गीव क्रूरमुख्येषा रोषावेशेन लकुटीं क्षिपन्ती परुषं गर्जति जटिला ।

(ग) भो द्विकुलाङ्गारधूमलेख, प्रत्यहं वञ्चयसीदानीं का प्रवृत्तिः ।

(घ) हा धिक् । कदलीव कम्पते राधा ।

(ङ) आर्ये, प्रसीद । न खलु वयमपराध्यामः ।

(च) पश्य राधिकां हस्ते गृहीत्वा ललितया समं प्रस्थिता वृद्धा ।

---

राधाभूते ॥ जात्विति । विश्रम्भो विश्वासः ॥ किमिति । शिकिर क्षिप ॥ अम्मा

**कृष्णः**—(निःश्वस्य ।)

व्यक्ति गते मम रहस्यविनोदवृत्ते
कष्टो लघिष्टहृदयस्तरसाभिमन्युः ।
राधां निरुध्य सदने विनिगूहते वा
हा हन्त लम्भयति वा यदुराजधानीम् ॥ २३ ॥

(प्रविश्य ।)

**मधुमङ्गलः**—भो पिअवअस्स, अच्चरिअम् । णूणं राहिआ कंपि विज्जं जाणई । (क)

**कृष्णः**—कथ्यतां कीदृशी विद्या ।

**मधुमङ्गलः**—कुलवुड्ढाहीरिमण्डले णिविट्ठाए भअवदीए अग्गदो विक्कोसन्ती जडिला राहिअं णीदा । (ख)

**कृष्णः**—ततस्ततः ।

**मधुमङ्गलः**—तदो दिट्ठं मए सिणेहेण विक्खुहिदासु तासु सव्वासु राहिआओग्गुण्ठणं उत्सारिअ हसन्तो सुअलो संवुत्तो । (ग)

**कृष्णः**—(स्मित्वा ।) ततस्ततः ।

**मधुमङ्गलः**—तदो हासकोलाहले उवरदे रुट्ठाहिं सव्वाहिं णिब्भच्छिदा लज्जाए णदमुही जडिला पलाइदा । (घ)

**कृष्णः**—कथ्यताम् । तयोर्द्वितीया कथमभूत् ।

---

(क) भोः प्रियवयस्य, आश्चर्यम् । नून राधिका कामपि विद्यां जानाति ।

(ख) कुलवृद्धाभीरिमण्डले निविष्टाया भगवत्या अग्रतो विक्रोशन्ती जटिला राधिकां नीता ।

(ग) ततो दृष्टं मया स्नेहेन विक्षुभितासु तासु सर्वासु राधिकावगुण्ठन त्यक्त्वा हसन्सुबल संवृत्त ।

(घ) ततो हासकोलाहल उपरते रुष्टाभि सर्वाभिर्निर्भर्त्सिता लज्जया नतमुखी जटिला पलायिता ।

---

इति । धीणां विस्मयोक्तिः ॥ व्यक्तिमिति । सदने गृहे निरुध्य विनिगूहते सवृणोति । यदुराजधानीं मथुराम् ॥ कथ्यतामिति । द्वितीया ललिता किमभूत् ॥

**मधुमङ्गलः**—राहिआए कण्णे पढिदेण केण वि मन्तेण पढमं जव्व सा वुन्दा किदा। (क)

**कृष्णः**—सखे, न राधिकायाः खल्वियं विद्या। किंतु तामभिमन्युना समाहृतामवधार्य मद्विनोदाय वृन्दया प्रणीतमिदं कौतूहलम्।

**मधुमङ्गलः**—(साट्टहासम्।) भो, सच्चं विअ कहेसि। दिट्ठं मए पुणोवि वुन्दाए। णिम्मिदराहावेसो सुअलो सुहराघरे पविट्ठो। (ख)

(नेपथ्ये।)

दधाना मध्याह्नज्वलदरुणकान्तप्रतिमया
वपुस्तुल्यं गण्डस्थलतुलितकारण्डवरुचिः।
कृशाङ्गीयं निद्रापरिमलदरिद्राक्षिकवला
सखीबाधां राधा हरिविरहखिन्ना प्रथयति॥ २४॥

**कृष्णः**—(सहर्षविक्षेपम्।) सखे, दिष्ट्या कीरेणामुना समाश्वासितोऽस्मि।

**मधुमङ्गलः**—णूणं वुन्दाभासिदं अणुकरेदि कीरो। (ग)

**कृष्णः**—सखे, द्रष्टुमिच्छामि तादृशौ वृन्दासुबलौ। ततस्त्वर्यताम्।

(मधुमङ्गलो वंशीं कृष्णकरे निक्षिप्य परिक्रामति।)

**कृष्णः**—सुविच्युतां वंशीमुपलब्धोऽस्मि। तदेनां पूरयामि। (इति तथा करोति।)

**मधुमङ्गलः**—(क्षणमुत्कर्णो भवन्। संरम्भेण।)

मनोहारी कोऽपि प्रतिमुखविसारी मृदुतया
विरावोऽयं वर्यां श्रवणपरिचर्यां रचयति।

---

(क) राधिकाया कर्णे पठितेन केनापि मन्त्रेण प्रथममेव सा वृन्दा कृता।

(ख) भोः, सत्यमिव कथयसि। दृष्टं मया पुनरपि वृन्दया। निर्मितराधावेषः सुबलो सुरतागृहे प्रविष्टः।

(ग) नूनं वृन्दाभाषितमनुकरोति कीरः।

---

दधानेति। राधा हरिविरहखिन्ना सती बाधां पीडां प्रथयति। कथंभूता। मध्याह्ने ज्वलन्ती या अरुणकान्तप्रतिमा सूर्यकान्तमयी प्रतिमा तया तुल्यं वपुर्दधाना। गण्डस्थल [illegible] कारण्डवरुचिः। कारण्डवो मद्गुभेदः॥ मनोहारीति। प्रतिमुखं [illegible] मृदु [illegible] [illegible] श्रवणयोः [illegible] करोति [illegible]।

ततः कर्णोत्तंसीकृतचटुलवंशी कलरुति-
'निरातङ्का शङ्के मिलति कलविङ्कावलिरितः ॥ २९ ॥

(पुनर्विलोक्य ।) ही ही । सद्दसाधम्मेण पदारिदो ह्मि । कङ्कणसिञ्जिदं क्खु एदम् । (क)

**राधिका—**

अमिअं पिअसि सुमहुरं वमसि रुअं विस्समोहणं विसमम् ।
तुज्झ ण दूसणमधवा मुरलि जदो दारुणासि किदा ॥ ३६ ॥ (ख)

**ललिता—**हला, पुरदो पुण्णाअस्स मूले कण्हो रेहदि । (ग)

**मधुमङ्गलः—**(विलोक्य । सहर्षम् ।) दूरे मग्गणिज्जो अत्थो कहं सअं जेव्व हत्थे उवत्थिदो । (इति परावृत्य ।) पिअवअस्स, पेक्ख । वुन्दाए सद्धं सुवलो तुज्झ संणिहिं लद्धो । (घ)

**कृष्णः—**(सस्नेहमालोक्य ।) हन्त, प्रियसख्यौ प्रविष्टा मे दृष्टिः प्रकामामोदते । (इति परिक्रम्य ।) भो सखीनां शिखामणे, तरसा संनिधीयताम् ।

**राधिका—**(सस्मितमपवार्य ।) हला ललिदे, मं क्खु सुअलं जेव्व जाणादि दे वअस्सो । (ङ)

**कृष्णः—**सखे मधुमङ्गल, पश्य संविधानकस्य सौष्ठवं यदसौ साक्षादग्रतो राधिकैव सवयस्या प्रतिभाति ।

---

(क) ही ही । शब्दसाधर्म्येण प्रतारितोऽस्मि । कङ्कणसिञ्जितं खल्वेतत् ।

(ख) अमृतं पिबसि सुमधुरं वमसि रुतं निश्वमोहनं विषमम् ।
तव न दूषणमथवा मुरली यतो दारुणासि कृता ॥

(ग) हला, पुरतः पुंनागस्य मूले कृष्णो राजते ।

(घ) दूरे मार्गणीयोऽर्थः कथं स्वयमेव हस्त उपस्थितः । प्रियवयस्य, पश्य । वृन्दया सार्धं सुवलस्तव संनिधिं लब्धः ।

(ङ) हला ललिते, मां खलु सुवलमेव जानाति तव वयस्यः ।

---

कलविङ्कावलिश्चटकवगसमूहः । इतो मिलतीति शङ्के । कर्णोत्तंसीकृता चटुला वंशी रुत्यर्थया तयाभूता सती अमृतमिति । दारुणा कृपाहीना, पक्षे दारुणा काष्ठेन कृता ॥ हन्तेति । प्रियसख्यौ सुवले प्रविष्टा दृष्टिः । वस्तुतस्तु प्रिये सख्यौ ललिताराधे पूर्वं

ललिता—हला राहिए, परिफुल्लो एसो सुरवल्लहो । (क)

मधुमङ्गलः—(सेर्ष्यम् ।) ठग्गिणि वुन्दे, अज्ज वि किंति अम्हाणं पुरदो राही राहीति भणसि । सुअल त्ति उज्जुअं कहेहि । (ख)

कृष्णः—सखे, मालमेवं ब्रवीः । प्रकामं राधाभिधानं धिनोति माम् । तदनेनाहमप्यामन्त्रयिष्ये । (इति संनिधाय ।) सखि राधे, परिष्वजस्व माम् । क्षणमहं तदेव प्रियाभिमर्षसौख्यमनुभवामि ।

ललिता—(राधां पृष्ठतः कृत्वा ।) णाअर, तत्थ गदुअ सुअलं जेव आलिङ्गेहि । अलं इमिणा दम्भमुद्दापउएण । (ग)

मधुमङ्गलः—(सरोषम् ।) वुन्दे, तुमं पइदिएवि णूणं ललिदा संवुत्ता, *जं पज्जुस्सुअं पिअवअस्सं वारेसि । (घ)

(प्रविश्य ।)

वृन्दा—सखि राधे, त्वद्भुजवल्लरीस्पर्शकामोऽयं पुरस्तात्पुंनागः । तदेनं दोहददानेनोत्फुल्लय ।

मधुमङ्गलः—(सविस्मयम् ।) वअस्स, दिट्ठं वुन्दाए इन्दजालम् । (इति सकौतुकमवेक्ष्य ।) इन्दजालिणि वुन्दे, घणाइदी वि धूमलेहा विअद्धसारङ्गं आकड्ढिदुं णारिहदि । (ङ)

(क) हला राधे, परिफुल्ल एष सुरवल्लभः ।

(ख) ठगिनि वृन्दे, अद्यापि किमित्यस्माकं पुरतो राधा राधेति भणसि । सुबलेति ऋजु कथय ।

(ग) नागर, तत्र गत्वा सुबलमेवालिङ्गय । अलमनेन दम्भमुद्राप्रयोगेण ।

(घ) वृन्दे, त्वं प्रकृतितोऽपि ललिता संवृत्ता, यत्पर्युत्सुकं प्रियवयस्यं वारयसि ।

(ङ) वयस्य, दृष्टं वृन्दाया इन्द्रजालम् । इन्द्रजालिनि वृन्दे, घनाकृतिरपि धूमलेखा विदग्धसारङ्गमाक्रष्टुं नार्हति ।

प्रविश्य या हरिः सेवानामामोदते । गर्तानां निगमनं दम्भमयं भावस्यम् ॥ मञ्जे इति । संविधानकम्···स्वस्य सेवारमनायाः ॥ हलेति । पुरस्तात् पुंनागः, परो भागा वृक्षश्च । पक्षान्तरे पुरुषश्रेष्ठेन स्नात्री ॥ स्वप्ने इति । अनेन राधानाम्ना । आमन्त्रयिष्ये संबोधयिष्यामि । प्रियापरिरम्भसौख्यमनुभवामि ॥ कामी॥ति । दोहदं पुष्पोद्गमसाधनम्, अभिलाषं च । उत्फुल्लय पुष्पवन्तं कुरु, आनन्दय च ॥ सवि-

**वृन्दा**—आर्य, तडिद्दामकण्ठीयं कादम्बिनी प्रतीयताम् ।

**कृष्णः**—(निभाल्य । सविस्मयम् ।) कथं सत्यमेवानया रङ्गणमालिकया दुस्त्यजकण्ठीयं प्रिया मे वार्षभानवी ।

**मधुमङ्गलः**—अइ देइ वुन्दे, पसीद । मा क्खु बुद्धिं मोहेहि । जं राहा चेचरुक्खमूले पत्थिदा । (क)

**कृष्णः**—(राधामालोक्य ।)

तवानुकारात्सुबलं दिदृक्षुणा मया त्वमाप्ता पुरत. सुदुर्लभा ।
सादृश्यत. काचमिवाभिलष्यता प्रेमाग्रभूमिर्वणिजा हरिन्मणिः ॥२७॥

**राधिका**—चिट्ठ । विण्णादो सि । (ख)

**ललिता**—

जलइ सही मह राहा मन्दा ज होइ णीलिणीराआ ।
कण्ह तुम णन्दसि ज धण्णो हालिद्दराओ सि ॥ २८ ॥(ग)

**कृष्णः**—

रोहिण्याधरशोभया विहरसे ज्येष्ठासि वामभ्रुवा
वाण्या राजसि चित्रया परिजनेष्वार्द्रा धियं यच्छसि ।

---

(क) अयि देवि वृन्दे, प्रसीद । मा खलु बुद्धिं मोहय । यद्राधा चैत्यवृक्षमूले प्रस्थिता ।

(ख) तिष्ठ । विज्ञातोऽसि ।

(ग) ज्वलति सखी मम राधा मन्दा यद्भवति नीलिनीरागा ।
कृष्ण त्वं नन्दसि यद्धन्यो हारिद्ररागोऽसि ॥

---

**स्सेति** । नारङ्गश्यातक ॥ **आर्य इति** । तडित्स्वरूपा माल्यकण्ठीय कादम्बिनी मेघ माला प्रतीयताम् । नेन तमाकृत्य योग्यैवेयमित्यर्थ । नाय सुवल सत्यैव राधेति भाव । तडिद्दामकण्ठीवस्त्रधारणेन लक्षणेन कृष्ण परिचिनोति सत्यमिति कृत्रिमैव राधा सुवल । अत एव तत्रोक्तम्—'पुणो ,वुन्दाए णिम्मितराहावेसो सुअलो सुहराघरे पहिदो' इति ॥ **तवेति** । अनुकारात् हरिन्मणे सादृश्यात् । काचमिव किमपि वस्तु अभिलष्यता वणिजा यथा मरकतमणि, आप्त ॥ **जलइ इति** । हरिद्रारागस्य ग्रहणे त्यागे च सुकरत्वात्तव राधाविषये दुःख नोत्पद्यते । नीलीरागस्य त्यागे दुःशकत्वात्तद्विषये दुःखमेव प्राप्नोति मे त्वरीदृि भाव ॥ **रोहिणीति** । अधरशोभया त्व रोहिणी लोहितवर्णा, पक्षे शब्दश्लेषेण रोहिणीनक्षत्रम् । ज्येष्ठा श्रेष्ठा, पक्षे तन्नामनक्षत्रम् । चित्रया मनोहरया वाण्या

राधे त्वं श्रवणोत्तरेति परितस्तारोदयोल्लासिनी
नाश्लेषार्पणदीक्षिते मयि कथं दाक्षिण्यमातिष्ठसि ॥ २९ ॥

वृन्दा—

मुधा मानोन्नाहाद्धृपयसि किमङ्गानि कठिने
रुषं धत्से किं वा प्रियपरिजनाभ्यर्थनविधौ।
प्रकामं ते कुञ्जालयगृहपतिस्ताम्यति पुरः
कृपालक्ष्मीवन्तं चटुलय दृगन्तं क्षणमिह ॥ ३० ॥

कृष्णः—

निष्ठुरा भव मृद्वी वा प्राणास्त्वमसि राधिके।
अस्ति नान्या चकोरस्य चन्द्रलेखा विना गतिः ॥ ३१ ॥

राधा—सच्चं माइण वि तुमं मोहणो सि। (क) (इति सशब्द क्रन्दति।)

ललिता—(सस्कृतेन।)

धारा बाष्पमयी न याति विरतिं लोकस्य निर्मित्सत.
प्रेमासिन्निति नन्दनन्दनरतं लोभान्मनो मा कृथाः।
इत्थं भूरि निवारितापि तरले मद्वाचि साचीकृत-
भ्रूभ्रन्द्वा नहि गौरवं त्वमकरोः किं नाद्य रोदिष्यसि ॥ ३२ ॥

(कृष्ण कराराविन्देन राधिकाश्रुबिन्दूनपसारयति।)

राधिका—मुद्धजणे वि वङ्कं ववहरन्तो कीस ण लज्जसि। (ख)

---

(क) सत्य मायिनामपि त्व मोहनोऽसि।
(ख) मुग्धजनेऽपि वक्र व्यवहरन्कस्मान्न लज्जसे।

---

राजसि, पक्षे पूर्ववत्। आर्द्रा सुखदाम्। श्रवणाभ्या कर्णाभ्यां उत्तरा श्रेष्ठा, पक्षे श्रवणा चासावुत्तरा चेति सा। ताराणा मुक्ताना नक्षत्राणा चोदय उल्लासिनी। इतिशब्दो हेतौ। अत एवाश्लेषा नक्षत्र तस्यार्पणे, पक्ष आश्लेष आलिङ्गनम्। दाक्षिण्यमानुकूल्यम्॥ **मुधेति**। उन्नाहो वृद्धिस्तस्मात्। इह श्रीकृष्णे। दृगन्त कटाक्ष चटुलय। कीदृश दृगन्तम्। कृपालक्ष्मीवन्तम्॥ **धारेति**। अस्मिन् कृष्णे। प्रेम निर्मित्सत वर्तुमिच्छतो

कृष्णः—

सरक्रीडालुब्ध पशुपरमणीपु स्फुटमह
तथाप्यक्ष्णोर्वर्तिस्त्वमसि मम दिव्याञ्जनमयी ।
तपाद्या किं भृङ्ग पृथुलमृतुलक्ष्मीर्न भजते
रसोल्लासादेन तदपि हि मधुश्रीर्मदयति ॥ ३३ ॥

वृन्दा—सखि, यथार्थं वक्ति वनमाली ।

कृष्णः—प्रिये, त्वया सहचर्या वनविहारमङ्गीकर्त्तुमिच्छामि ।

वृन्दा—तेनाह सखि, वृन्दमपधापयामि । (इति परित पश्यन्ती ।)

सित वितनु माधवि मथय मल्लि हासोद्गम
मुदा विकस पाटले पुरटयूथि निद्रा त्यज ।
प्रसीद शतपत्रिके भज लवङ्गवल्लि श्रिय
दधार सह राधया हरिरय विहारस्पृहाम् ॥ ३४ ॥

मधुमङ्गलः—ही ही । कह कन्तारजक्खिण्णीए वाआमात्तएण उप्फुल्लीकिअ वल्लिमण्डलम् । (क)

कृष्णः—सखे, चित्तमामोदयन्ति पुष्पामोदवत्यो वीरुध ।

मधुमङ्गलः—वअस्स, तुह्माण सव्वाओ चित्त आमोदेन्ति लदा । मम उण एक्का हेमजूही ज्जेव, जा गोकुलेसरीए सक्किअङ्कब्भधिअ धारेइ । (ख)

ललिता—(स्मित्वा ।) अज्ज, तदो क्खु पअडा दे रसण्णदा । (ग)

---

(क) ही ही । कथ कान्तारयक्षिण्या वाचामात्रेणोत्फुल्लीकृत वल्लीमण्डलम् ।

(ख) वयस्य, युष्माक सर्वाश्चित्तमामोदयन्ति लता । मम पुनरेका हेमयूथ्येव, या गोकुलेश्वर्या सस्कृत गनाचलमिव स्तवक (?) धारयति ।

(ग) आर्य, तत खलु प्रकटिता ते रसज्ञता ।

---

जनस्य । इति हेतोर्नन्दनन्दनरत मनो मा कृथा ॥ स्मरेति । ममाक्ष्णो कर्पूरादिनिर्मितदिव्याञ्जनमयी वर्तिकास्वरूपा त्वम् । तपाद्या निदाघाद्या । ऋतुलक्ष्मीस्तत्तदुद्भवपुष्पादीनि किं न भजते । तदपि मधुश्री रसोल्लासाद्धेतोरेन भ्रमर पृथुल यथा स्यात्तथा मदयति । अन्यऋतुशाभासेविन्यपि भ्रमरे सर्वत परमोत्कृष्टापि वसन्तश्रीर्नोदास्ते, प्रत्युत

**मधुमङ्गलः**—(सेर्ष्यम् ।) वअस्स, पेक्ख । इमाओ रत्ता अवि वङ्ककिंसुअलइआओ गोइआ विअ मं ण सुहवेदि । (क)

**ललिता**—वुन्दे, एदे वल्लआ विअ पेक्खीअन्तु जवात्थवआ, जे क्खु लोअणलोहणिज्जा वि णामोदं वित्थारेन्ति । (ख)

**मधुमङ्गलः**—(सरोषम् ।) जाणह्म तुह्माण गोइआण कम्म जाओ रसकुम्भ वि दिढ णिम्मन्थिअ सिणेह कड्ढन्ति । (ग)

**वृन्दा**—(स्मित्वा ।) सखि ललिते,

ये दण्डपाशभाजः स्फुट वहन्तो मनः शिलाकल्पम् ।
कान्तारमाश्रयन्ते तेभ्यो वः क्षेममुल्लसतु ॥ ३६ ॥

**कृष्णः**—(स्मित्वा ।) वृन्दे, ज्ञात ज्ञातम् । बुद्धिं मूर्छयता कूर्चिकालोभेन गोपिकाञ्चलग्राहिणी त्व कृतासि ।

(नेपथ्ये ।)

कस्तूरिकेव दुरवच्छदसगमेय
गोपीततिर्मेदमयी किल पिच्छिला च ।

---

(क) वयस्य, पश्य । एता रक्ता अपि वक्रकिंशुकलतिका गोपिका इव मा न सुखयन्ति ।

(ख) वृन्दे, एते वल्लवा इव प्रेक्ष्यन्ता जवास्तबका, ये खलु लोचनलोभनीया अपि नामोद विस्तारयन्ति ।

(ग) जानामि युष्माक गोपिकाना कर्म या रसकुम्भमपि दृढ निर्मथ्य स्नेह कर्षन्ति ।

---

आनन्दयत्येव यथा, त्वमपि तथा भवेति भाव ॥ **वअस्सेति** । किंशुक पलाश । अत्र प्रेमवतीष्वपि गोपीषु वाम्यलक्षण वक्रत्वमित्याक्षेप ॥ **वुन्देति** । अत्र कृष्णादिषु वहि सौन्दर्यमात्र लभ्यते, प्रेमगन्धोऽपि नास्तीत्याक्षेप ॥ **जाणह्म इति** । अय भाव — युष्मद्धस्तपातेन स्नेहमयोऽपि दुग्धदध्यादिकुम्भविलोडनतो नवनीतक्रमेण स्नेहरहितो भवति । कुत पुनर्युष्मासु स्नेहसबन्ध । स्नेहमपि कृष्ण तद्गुणाक्रमणेन स्नेहहीन भवन्त्या वदन्तीति भाव ॥ **य इति** । दण्डपाशो लोकमारणार्थं गवा पालनार्थं च भजते । निर्दयत्वेन शिलाकल्प मनो वहन्त । मन शिला धातुविशेषस्तेनाकल्प वेष च । कान्तारं दुर्गम वर्त्म आश्रयन्ते । वर्त्मपातिन इति भाव । पक्षे गोचारणार्थं वनमार्गपातिन कृष्णादयश्च शस्त्रग्रहणप्रेमच्छेदनादिभि प्राणहारकत्वेन तुल्या एवेति भाव ॥ **वृन्देति** । कूर्चिका क्षीरविकार 'खुरचिनी' इति प्रसिद्धस्तस्य लोभेन कृता ॥ **कस्तूरिकेति** । दु ये

दाक्षिण्यतस्तनुभृतामनुरञ्जनोऽयं
वासन्तवायुरिव हन्त मुरान्तकारी ॥ ३६ ॥

**कृष्णः**—(पृष्ठतो दृष्टिं क्षिपन् ।) साधु भो कीरराज, साधु ।

**मधुमङ्गलः**—विहङ्गपुङ्गअ, चउद्दहविज्जाविअक्खणो दीहाउ होहि।(क)

**ललिता**—हण्डे चण्डालकीर, पअण्डससाअणतुण्डराहुणो पाहुणो होदु दे पिण्डससी । (ख)

**कृष्णः**—सखे, तूर्णमस्मै समर्पय पाकिमानि दाडिमीबीजानि ।

**मधुमङ्गलः**—भो विन्दावणविहप्पए, दाडिमीवीसहिन्तोवि सुट्ठु कन्त ललिदाए दन्तपंत्तिं दे दाइस्सम् । (ग)

(पुनर्नपथ्ये ।)

चञ्चलसञ्झाघण विअ मुहुत्तराअ तणोदि दे सामी ।
वहइ सिणेह राही केअल णअणीअपुत्तीव ॥ ३७ ॥ (घ)

**ललिता**—(सानन्दम् ।) सहि सारिए, सोहग्गवदी होहि । ज पच्चुत्तरेण णिज्जिदो तुए दुम्मुहो कीरो । (ङ)

**कृष्णः**—(स्वगतम् ।) ध्रुव वृन्दयेदमध्यापितकौशल विहङ्गयोर्द्वन्द्वम् ।

**मधुमङ्गलः**—(सक्रोधम् ।) हञ्जे, भज्जेमि दे तिक्खजप्पिण चञ्चुपुडम्।(च) (इति सव्याज दण्ड क्षिपति ।)

---

(क) विहङ्गपुगन, चतुर्दशविद्याविचक्षणो दीर्घायुर्भव ।

(ख) हण्डे चण्डालकीर, प्रचण्डशशादनतुण्डराहो प्राघुणो भवतु ते पिण्डशशी ।

(ग) भो वृन्दावनबृहस्पते, दाडिमीबीजेभ्योऽपि सुष्ठु कान्ता ललिताया दन्तपङ्क्तिं ते दास्यामि ।

(घ) चञ्चलसन्ध्याघन इव मुहूर्तराग तनोति ते स्वामी ।
वहति स्नेह राधा केवल नवनीतपुत्रीव ॥

(ङ) सखि सारिके, सौभाग्यवती भव । यत्प्रत्युत्तरेण निर्जितस्त्वया दुर्मुख कीर ।

(च) हण्डे, भनज्मि ते तीक्ष्णजल्पि चञ्चुपुटम् ।

---

नावच्छन्नसगम प्रातियासाम् । एव च वस्तुरिकावृत्ति । दाक्षिण्यत दक्षिणदेशोद्भवत्वात्, आनुकूल्याच्च । सर्वसुग्भलमनुरञ्जकत्व चेति वासन्तवायोर्गुणद्वय कृष्णे वर्तते ॥ हण्डे इति निकृष्टसंबोधने । 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमर । चण्डालस्यायो कीरश्चेति कर्मधारय । शशादन श्येन । प्राघुणोऽतिथि ॥ हञ्जे हे चटि ॥

राधिका—हन्त, कथमुड्डीणं वावदूअं विहङ्गमिहुणम्। (क)

कृष्णः—(राधामवेक्ष्य।)

सेवन्ते तरुगेहिनः सुमनसां वृन्दैर्मधुस्यन्दिभि-
र्यत्रोत्फुल्ललतावधूभिरभितः संगत्य भृङ्गातिथीन्।
संवीता पशुभिस्तथा खगकुलैः खेलद्भिरव्याहतं
न स्यात्कस्य सुकण्ठि सेयमधिकानन्दाय वृन्दाटवी॥ ३८॥

अथवा।

हरिणीर्विडम्बयसि नेत्रखेलया ललितैर्लतापिककुलं कलोक्तिभिः।
शिखिनश्च कुन्तलकलापविभ्रमैरिति ते पुरः किमिव मे वनश्रिया॥ ३९॥

वृन्दा—पश्य पश्य।

विरतोर्मिरियं सुनीरजा धृतशुद्धोज्ज्वलसत्त्वसंततिः।
स्फुटकृष्णरुचिर्यमादृता मुनिगोष्ठीव चकास्ति भानुजा॥ ४०॥

कृष्णः—प्रिये, पश्य पश्य।

स्मितरुचिविराजितं ते मुखमिव नीराजयत्यधीराक्षि।
नीरजबान्धवदुहितुर्नीरजराजी मरुद्भ्रमिता॥ ४१॥

वृन्दा—(परिक्रम्य। नीरजान्याहृत्य च।) पुण्डरीकाक्ष, स्तोकोत्फुल्लमिदं गृहाण लीलापुण्डरीकम्। तथावतंसोचितं कोकनदद्वन्द्वम्।

कृष्णः—(सहर्षमादाय।) वृन्दे, रक्तोत्पले राधाकर्णयोराधानेन श्रियं

---

(क) हन्त, कथमुड्डीनं वावदूकं विहङ्गमिथुनम्।

---

**सेवन्त इति**। सुमनसां पुष्पाणाम्। यत्र यस्यां वृन्दाटव्याम्। उत्फुल्ललतावधूभिः सगत्य उत्फुल्लेति तासामप्यतिथिसेवायामौत्सुक्य ध्वनितम्। अव्याहत यथा स्यात्तथा खेलद्भिः। सुकण्ठी तरुलतादीनां भृङ्गागानप्रियत्व त्वयावगम्यत एवेति भावः॥ **हरिणीरिति**। ते तव पुरतः वनशोभया मे मम किं कार्यम्। ततोऽप्यधिकशोभाव···ति भावः। तदेवाह—**हरिणीर्विडम्बयसीत्यादि**॥ **विरतेति**। विरता अपगता ऊर्म(मं)यस्तरङ्गाः, कामक्रोधादयश्च यस्याः। सुष्ठु नीरजानि कमलानि यस्याम्, रजोगुणरहिता च। सत्त्वसततिर्जीवसमूहः, सत्त्वगुणश्रेणी च। स्फुट कृष्णा श्यामा, कृष्णे च रुचिर्यस्याः। यमेन स्वभ्रात्रा, यमैश्चाहिंसादिभिरादृता मानिता॥ **स्मितेति**। मरुद्भ्रमिता नीरजराजी ते मुख नीराजयतीत्युत्प्रेक्षा॥ **वृन्दे इत्यादि**। 'रक्तोत्पल कोकनदम्' इत्यमरः।

लभताम् । (इति तथा कृत्वा । सकौतुकम् ।) हन्त, पुण्डरीककोषे चञ्चरीको वर्तते ।

वृन्दा—

मधुपः कमलेन सार्धमुद्यन्मकरन्देन मुकुन्दमाससाद ।
सरसेषु विनिर्मितो हि सङ्गः परमानन्दभरोन्नतिं तनोति ॥ ४२ ॥

कृष्णः—प्रिये, पश्य पश्य ।

अस्मिन्मदीयकरसङ्गिनि पुण्डरीक-
कोशे क्षणं किल विलम्ब्य शिलीमुखोऽयम् ।
कर्णावलम्बि तव कोकनदं प्रपेदे
कं वा बलान्न हि हरत्यनुरागलक्ष्मीः ॥ ४३ ॥

(राधिका सम्भ्रमं नाटयन्ती भुजलतां क्षिपति ।)

कृष्णः—(स्फुटं विहस्य ।)

कर्णोत्तंसितरक्तपङ्कजजुषो भृङ्गीपतेर्झंक्रिया-
भ्रान्तेनाद्य दृगञ्चलेन दधती भृङ्गावलीविभ्रमम् ।
त्रासान्दोलितदोर्लतान्तविचलच्चूडाझणत्कारिणी
राधे व्याकुलतां गतापि भवती मोदं ममाधास्यति ॥ ४४ ॥

राधिका—(सत्रासं चेलाञ्चलमुदञ्चयन्ती ।) कधं अज्जवि ण चलदि धिट्ठो । (क)

कृष्णः—

मधुराक्षि मुधाथ संभ्रमेण क्षिप चेलाञ्चलमञ्जसा न भूयः ।
पिबतु श्रवणोत्पलोद्गतं ते मधुपोऽयं मधुमङ्गलं कृशाङ्गि ॥ ४५ ॥

(क) कथमद्यापि न चलति धृष्ट ।

मधुप इति । कमलेन सार्धं वसन् मधुप इत्यर्थः । अर्थान्तरन्यासमाह—हि यस्मात्सरसेषु भक्तेषु प्रकृते मकरन्दरूपरसयुक्तेषु कमलेषु ॥ प्रिये इत्यादि । शिलीमुखो भ्रमरः । 'अलिबाणौ शिलीमुखौ' इत्यमरः । अनुरागलक्ष्मी, पक्षे कोकनदस्थरक्तिमशोभा । कं वेति । अस्मानेव केवलं हरतीति न वक्तव्यमिति भावः ॥ कर्णेति । हे राधे, व्याकुलतां गतापि भवती मम मोदमाधास्यति करोति । तव व्याकुलत्वेनापि ममानन्द एवाभ्यधिको भवतीत्यर्थः । कीदृशी भवती । कर्णोत्तंससेविनो भ्रमरस्य झंकारभ्रान्तेनेतस्ततश्चरितचकितं प्रसरता दृगञ्चलेन भृङ्गसमूहविभ्रमं दधती त्रासेनान्दोलित-

**मधुमङ्गलः**—भो वअस्स, कीस बम्हणं मं महुवेण विवाएसि। (क)
(इति दण्डेन भ्रमरं ताडयति।)

**राधिका**—(सश्लाघम्।) अज्ज, पिअंकरो ममासि संवुत्तः। (ख)

**मधुमङ्गलः**—कहं महुसूअणो तक्कालं जेव तिरोहिदो, जं कुदो वि ण लक्खीअदि। (ग)

**राधिका**—(सव्यामोहम्।) हद्धी हद्धी। कहिं गदो महुमहणो। (घ)
(इति संस्कृतेन।)

समजनि दवाद्वित्रस्तानां किमार्तरवो गवां
मयि किमभवद्वैगुण्यं वा निरङ्कुशमीक्षितम्।
व्यरचि निभृतं किं वा हूतिः कयाचिदभीष्टया
यदिह सहसा मामत्याक्षीद्वने वनजेक्षणः॥ ४६॥

(कृष्णः संज्ञया सर्वान्निवार्य स्मितं करोति।)

**राधिका**—हन्त। (संस्कृतेन।)

वासन्तीभिरयं न मे कचभरः कंसारिणोत्तंसित-
स्तस्योरस्थलचुम्बिचम्पकमयैर्नागुम्फि माल्यं मया।
मल्लीभिश्च निरर्गलं परिहसन्नायं बलात्ताडितः
प्रारम्भेऽद्य वनोत्सवस्य विरहच्छद्मादयः प्रोदगात्॥ ४७॥

---

(क) भो वयस्य, कस्माद्ब्राह्मणं मां मधुपेन विपाययसि।
(ख) आर्य, प्रियंकरो ममासि संवृत्तः।
(ग) कथं मधुसूदनस्तत्कालमेव तिरोहितः, यत्कुतोऽपि न लक्ष्यते।
(घ) हा धिक् हा धिक्। कुत्र गतो मधुमथनः।

---

योर्दोलितयोरन्ते विचलन्तीनां चूडानां झणत्कारवती॥ **भो वअस्सेति**। विपाययसि। स्वादयसीत्यर्थः। पूर्वपदस्य मधुमङ्गलेनायमर्थः कृतः—भवणोत्पलादुद्दत्त सचेलाञ्चल भूयो मा क्षिप। अथ मधुपः मधुमङ्गल तन्नामविप्र पिबतु स्वादतु इति॥ **कहमिति**। मधुसूदनो भ्रमरः॥ **हद्धीत्यादिभिर्मधुसूदनशब्दार्थं** कृष्णमभिप्रेत्य विच्छेदनायन्त्या-स्तस्या जात प्रेमवैचित्र्यं वर्णयति—कुत्रगतो मधुसूदनः कृष्णः इति। **समजनीति**। मयि निरङ्कुशवाम्यादिलक्षणं वैगुण्यं प्रेक्षितम्। हूतिराकारणम्। अभीष्टया कयाचिद्वनितया। दवो वनवह्निः॥ **वासन्तीभिरिति**। चम्पकमयैश्चम्पकैः। स्वरूपे मयट्॥

वृन्दा—(अपवार्य ।) काममन्धकारिणी प्रेमबन्धकन्दली या खलु विस्पष्टमपि नानुसंधापयति ।

राधिका—सहि वुन्दे, रक्खेहि मम् । (इति त्रासं नाटयन्ती ।)

सप्पा सप्पइ भिङ्गपन्तिमिसदो काली रसालाङ्कुरे
रत्तासोअसिरे विरेहइ तधा पुप्फच्छलादो सिही ।
सिङ्गे केसुअसाहिणो अ कलिआदम्भेण संभेदिणी
मं भेत्तुं कुसुमाउहस्स वलइ क्रूराद्धचन्दाअली ॥ ४८ ॥ (क)

(इति वैवश्यं नाटयति ।)

कृष्णः—(संभ्रमादभ्युपेत्य पाणिं गृह्णनुच्चैः ।) सुकुमारि, किमकाण्डे कातरासि । यतः ।

त्वन्मुखलक्ष्मीग्लपिता चन्द्रावलिरिह बिभेति पूर्णापि ।
प्रणयार्थे तव कर्तुं किमर्धचन्द्रावली क्षमते ॥ ४९ ॥

राधिका—(सधैर्यं लज्जां नाटयन्ती स्वगतम् ।) कधं अच्छिलग्गं चेअ हारिदं मणन्ती खिण्णह्मि । (ख)

कृष्णः—प्रिये, पश्य पश्य ।

परिणतवरबीजस्पर्धिदन्तोरुभासः
कुसुममुपहसन्त्यास्तन्वि दन्तच्छदेन ।

---

(क) सखि वृन्दे, रक्षय माम् ।

सर्पी सर्पति भृङ्गपङ्क्तिमिषतः काली रसालाङ्कुरे
रक्ताशोकशिरसि विराजति तथा पुष्पच्छलाच्छिखी ।
शृङ्गे किंशुकशाखिनश्च कलिकादम्भेन संभेदिनी
मां भेत्तुं कुसुमायुधस्य वल्गते क्रूरार्धचन्द्रावली ॥

(ख) कथमक्षिलग्नमेव हारितं मन्यमाना खिन्नास्मि ।

---

काममिति । प्रेमबन्धस्य कन्दली समूहः । अन्धकारिणीति 'आढ्यसुभग-' इत्यादिना ख्युन्प्रत्ययान्तम् ॥ सप्पा इति । काली श्यामवर्णा । शिखी अग्निः । 'शिखिनौ वह्नि-बर्हिणौ' इत्यमरः । किंशुकशाखिनः पलाशवृक्षस्य । अर्धचन्द्रो नामास्त्रविशेषः । चन्द्रावलीपक्षे समासो पूर्ववत् ॥ परिणतेति । परिणतानां वरबीजानां स्पर्धिनो दन्तानामुरुभासः

फलविजयिकुचायास्त्वद्भयाद्दाडिमीयं
मृदुलपवनदोलादम्भतः कम्पतेऽद्य ॥ १० ॥

वृन्दा—सखि, निर्वर्णय तव कर्णिकोचितकोरकं कर्णिकारममुम्।

राधिका—

णअकण्णिआरकुसुमे भसलो रसलोहणिच्चलो भोदि। (क)

कृष्णः—

काञ्चनमञ्चनिविष्टो रसराजोऽयं शरीरीव ॥ ११ ॥

राधिका—पेक्ख पेक्ख। (संस्कृतेन।) (ख)

उद्धुरमरन्दमत्ता रुद्धे सारेण गन्धविसरेण।
इह सुन्दर मल्लिगणे रोलम्बा हन्त गुञ्जन्ति ॥ १२ ॥

(कृष्णः 'उद्धुरमरन्द–' इत्यादि पठति।)

वृन्दा—

पीतातिसूक्ष्मशिखरा चम्पककलिकेयमाभाति।

कृष्णः—

मानवतीहृन्मथिनी हैमी कामस्य शक्तिरिव ॥ १३ ॥

मधुमङ्गलः—भो वअस्स, एसा कामस्स सत्ती ण होइ। पेक्ख जडिलाखित्ता सा हरिआलगोरी लउडिआ। (ग)

---

(क) नवकर्णिकारकुसुमे भसलो रसलोभनिश्चलो भवति।

(ख) प्रेक्षस्व प्रेक्षस्व।

(ग) भो वयस्य, एषा कामस्य शक्तिर्न भवति। पश्य जटिलाक्षिप्ता सा हरिताल*गौरी लकुटिका।*

---

श्रेष्ठकान्तयो यस्यास्तथाभूतायाः। त्वत्तः सकाशाद्यो भयस्तस्मात्। दन्तच्छदेनाधरेण मृदुलपवनान्दोलनच्छलेन। णअकण्णिआरेति। भसलो भ्रमरः॥ काञ्चनेत्याद्युत्तरार्धं पूरयन्नात्मनो हृतत्वमिव व्यनक्ति कृष्णः। रसराजः शृङ्गारस्तस्य श्यामवर्णत्वादुत्प्रेक्षा। उद्धुरेति। मल्लिगणे कीदृशे। सारेण श्रेष्ठेन गन्धसमूहेन रुद्धे। इत्येकदैवोच्चरितैः राधयापि हृतत्वमिव व्यञ्जितम्। ततश्च कृष्णस्य पुनः पद्यस्य प्राचीनत्वव्यञ्जनायाथच

(प्रविश्य ।)

**जटिला**—अरे जिम्ह बम्हण, एत्थ लगुडी मए विसुमरिदा । (क)

**राधिका**—(अपवार्य । सभयम् ।) सहि, परित्ताहि परित्ताहि । एसा कालरत्तीव दारुणा वुड्ढी म दिट्ठवदी । (ख)

(इति ललितावृन्दाभ्यां निष्क्रान्ता ।)

**कृष्णः**—(अपवार्य ।)

*मम संगमामृतरसं न जिघृक्षति न च जिहासति प्रकटम् ।*
*जटिलाव्याघ्रीचकिता तृषिता राधा कुरङ्गीयम् ॥ ९४ ॥*

**मधुमङ्गलः**—भो सरमालाङ्गूलकुटिले, घेप्प अप्पणो जुट्ठिम् । (ग)

**जटिला**—(यष्टिमादाय ।) अरे सुअल, कीस तुमं वहुडिआवेसेण मं सदा विडम्बेसि । (घ)

**कृष्णः**—(स्वगतम् ।) दिष्ट्या सुबलतया ज्ञातमभूत् । (प्रकाशम् । सनर्मस्मितम् ।) जटिले, गुरुभ्यः शपमानोऽस्मि । राधिकैव साधयति । न खल्वसौ सुबलः ।

**जटिला**—रे धूत्तविअक्खण, हं सव्वं परीक्खिदुं खमम्हि । ता अलं एत्थ ठग्गात्तणेण । (ङ)

(इति निष्क्रान्ता ।)

**कृष्णः**—सखे, समागच्छ । गोकुलमेव प्रविशावः ।

(इति निष्क्रान्तौ ।)

(इति निष्क्रान्ताः सर्वे ।)

इति राधाप्रसादनो नाम पञ्चमोऽङ्कः ।

---

(क) अरे कुटिल ब्राह्मण, अत्र लगुडी मया विस्मृता ।
(ख) सखि, परित्राहि परित्राहि । एषा कालरात्रीव दारुणा वृद्धा मां दृष्टवती ।
(ग) भो सरमालाङ्गूलकुटिले, गृहाणात्मनो लगुडीम् ।
(घ) अरे सुबल, कस्मात्त्वं वधूटिकावेशेन मां सदा विडम्बयसि ।
(ङ) रे धूर्तविचक्षण, अहं सर्वं परीक्षितुं क्षमास्मि । तस्मादलमत्र ठगत्वेन ।

---

तस्य धुनधरत्वज्ञापनाय ॥ अरे इति । पूर्वं लगुडं क्षिपन्ती पश्चात् गर्जन्तीत्युक्तत्वात् ॥ **भो सरमालाङ्गूलेति** । सरमा शुनी ॥ **दिष्ट्येति** । साधयति गच्छति । नाट्योक्तौ साधयति । गच्छ गर्भ ॥ इति पञ्चमोऽङ्कः ॥

षष्ठोऽङ्कः ।

(ततः प्रविशति जटिला ।)

जटिला— सुदं मए अज्ज पीअपडेण किदुत्तरीआ वहू घरे चिट्ठइ । ता गदुअ जहत्थं णिद्धारइस्सम् । (परिक्रम्य पश्यन्ती ।) कधं एसा विसाहा घुम्मिअ घुम्मिअ अलिन्दे पडइ । ता सद्दाइस्सम् । (इत्युपसृत्य ।) विसाहे, जादो एक्कपहरो तहवि घुम्मसि । (क)

(प्रविश्य ।)

विशाखा—(स्वगतम् ।) सपदं रासमहूसवगब्भासु सव्वरीसु कुदो णिद्दागन्धोवि अम्हाणम् । ता जुत्त जेव्व घुम्मणम् । (इति हठाद्दृशौ विकाश्य । प्रकाशम् ।) अज्जे, अज्ज भअवदीए णिदेसेण देअदाअदणे अम्हे दिण्णजाअरम्ह । (ख)

जटिला—(स्वगतम् ।) अदो जेव्व पदोसे वहुए सेजा सुणा आसि । (प्रकाशम् ।) विसाहे, आआरेहि वहूअम् । (ग)

विशाखा—हला राहे, इदो इदो । (घ)

(प्रविश्य ।)

राधा—(चक्षुषी विमृज्य । सजृम्भम् ।) विसाहे, बाढं णिद्दाउलह्मि । (इति दृष्टिं दरोद्घाट्य सशङ्कं स्वगतम् ।) कध इध जेव्व अज्जा । (ङ)

---

(क) श्रुतं मयाद्य पीतपटेन कृतोत्तरीया वधूर्गृहे तिष्ठति । तद्गत्वा यथार्थं निर्धारयिष्यामि । कथमेषा विशाखा भ्रान्त्वा भ्रान्त्वा अलिन्दे पतति । तच्छब्दायिष्ये । विशाखे, जात एकप्रहरस्तथापि भ्रमसि ।

(ख) साम्प्रतं रासमहोत्सवगर्भासु स(श)र्वरीषु कुतो निद्रागन्धोऽप्यस्माकम् । तद्युक्तमेव भ्रमणम् । आर्ये, अद्य भगवत्या निदेशेन देवतायतने वयं दत्तजागराः स्म ।

(ग) अत एव प्रदोषे वध्वा शय्या शून्यासीत् । विशाखे, आकारय वधूम् ।

(घ) सखि राधे, इत इतः ।

(ङ) विशाखे, बाढं निद्राकुलास्मि । कथमित एव आर्या ।

---

धारावाहिचतुरदिनलीलादिग्दर्शनं समाप्य सम्प्रति शारदरजन्यां महारासविलासादिभिरविदुषां चालस्तद्वर्णने प्रत्यग्रौत्सुक्यमवधार्य तत्र चित्तप्रवेशार्थं दिनान्तरलीलामनुसरन् कविः—ततः प्रविशतीत्यादिना यावदङ्कसमाप्तिम् ॥ सुदमिति । अलिन्दे गृहस्य बहिर्द्वारप्रकोष्ठे ॥ प्रदोषे निशामुखे ।

**जटिला**—(राधा निर्वर्ण्य। स्वगतम्।) हद्धी हद्धी। सच्च जेव्व एदं पीअम्बरम्। (क)

**राधिका**—(जनान्तिकम्।) हला, सुदं मए सारङ्गीमुहादो जं णिसीधे वुड्ढिआए तस्सिं विलासपुलिणे गद आसि। ता णूण म्हे तत्थ दिट्ठम्हि।(ख)

**विशाखा**—णहु णहु। जं कधिदं वुन्दाए तुमं घेत्तुण तिरोहिदे कण्हे तथा अम्हेसु दोसु सहीसु ससङ्कं तुह उद्देसस्स गदासु एसा वुड्ढी उवत्थिदा। (ग)

**राधिका**—तदो कीस इअं कोहभअंकरीए मं पेक्खन्ती चिट्ठदि।(घ)

**जटिला**—(सेर्ष्यम्।) मिच्छाजप्पिणि विसाहे, किं णाम अन्धासि तुमम्। (ङ)

**विशाखा**—(राधा विलोक्य। सखेदम्। जनान्तिकम्।) अइ विलासविम्हले, किं क्खु इदम्। (च)

**राधिका**—(स्व वक्षो निरीक्ष्य ससम्भ्रमम्।) हला, तुम जेव्व सरणम्। (छ)

**विशाखा**—(जटिलामवेक्ष्य। संस्कृतेन।)

मुदा क्षिप्तैः पर्वोत्तरलहृदयाभिर्युवतिभि
पय.पूरैः पीतीकृतमतिहरिद्राद्रवमयै।
दुकूलं दोर्मूलोपरि परिदधाना प्रियसखी
कथं राधामार्ये कुटिलितदृगन्तं कलयसि ॥ १ ॥

---

(क) हा धिक् हा धिक्। सत्यमेवेद पीताम्बरम्।

(ख) हला, श्रुत मया सारङ्गीमुखाद्यन्निशीथे वृद्धया तस्मिन्विलासपुलिने गत मासीत्। तन्नून वय तत्र दृष्टा स्म।

(ग) न खलु न खलु। यत्कथित वृन्दया त्वा गृहीत्वा तिरोहिते कृष्णे तथाव योर्द्वयो सख्यो सशङ्क तवोद्देशाय गतयो सतोरेषा वृद्धा उपस्थिता।

(घ) तदा कस्मादिय कोपभयकरी मां पश्यन्ती तिष्ठति।

(ङ) मिथ्याजल्पिनि विशाखे, कि नामान्धासि त्वम्।

(च) अयि विलासविह्वले, किं खल्विदम्।

(छ) हला, त्वमेव शरणम्।

---

हलेति। निशीथ अर्धरात्रे॥ मुदेति। युवतिभि क्षिप्तै पय पूरै पीतीकृत दुकूल परिदधानाम्। क। दोर्मूलोपरि। कुटिलितदृगन्त यथा स्यात्तथा किं पश्यसि।

जटिला—(सविस्रम्भम् ।) विसाहे, तुए ज्जेव्व चञ्चलाए मम पुत्तघरं विणासिदम्, जं जोव्वणन्धाणं गोईणं मज्झे वहुडीअ णिज्जइ । (क)

विशाखा—अज्जे, किं ति मं उवालहेसि । णं उवसण्णं दीवमालिआपव्व लच्छीं उवालहेहि, जाए सव्वं आबालवुड्ढं गोउलं ज्जेव्व उम्मादिदम् । (ख)

जटिला—वत्से, सच्चं कहेसि । अज्ज रत्तिम्मि दिट्ठं मए सव्वाओ गोउलकिसोरीओ तत्थ पुलिणे उम्मत्तीभविअ किंपि किंपि चिट्ठन्दि । (ग)

(विशाखा सहर्षभङ्ग राधिकामीक्षते ।)

जटिला—(सदैन्यम् ।) अइ विसाहे, पसीद पसीद । एसा अङ्गुलिसिहरं मुहे णिक्खिविअ अब्भत्थेमि । ता मइ एक्कं अणुग्गहं करेहि । (घ)

विशाखा—(सप्रश्रयम् ।) अज्जे, किंति एव्वं भणासि । णिकामं आणवेहि । (ङ)

जटिला—वच्छे, तुमं विसुद्धासि । ता कण्हहत्थादो रक्खेहि वहूडिअम् । (च)

विशाखा—अज्जे, णिच्चिन्ता होहि, जं ललिदा क्खु एत्थ दक्खा विअक्खणा अ । (छ)

---

(क) विशाखे, त्वयैव चपलया मम पुत्रगृहं विनाशितम्, यद्यौवनान्धानां गोपिकानां मध्ये वधूटी नीयते ।

(ख) आर्ये, किमिति मामुपालभसे । इमामुपसन्नां दीपमालिकापर्वलक्ष्मीमुपालभस्व, यया सर्वमाबालवृद्धं गोकुलमेवोन्मादितम् ।

(ग) वत्से, सत्यं कथयसि । अद्य रात्रौ दृष्टं मया सर्वा गोकुलकिशोर्योऽत्र पुलिने उन्मत्तीभूय किमपि किमपि चेष्टन्ते ।

(घ) अयि विशाखे, प्रसीद प्रसीद । एषाङ्गुलिशिखरं मुखे निक्षिप्याभ्यर्थये । तन्मय्येकमनुग्रहं कुरु ।

(ङ) आर्ये, किमित्येवं भणसि । निकाममाज्ञापय ।

(च) वत्से, त्वं विशुद्धासि । तत्कृष्णहस्ततो रक्षय वधूटिकाम् ।

(छ) आर्ये, निश्चिन्ता भव, यल्ललितात्र दक्षा विचक्षणा च ।

---

भवेति । दक्ष चतुर । [illegible] ॥

जटिला—कहिं गदा ललिदा । (क)

विशाखा—पेक्ख । पउमाए समं इदो जेव्व एसा आअच्छदि । (ख)

जटिला—अहं उप्पलिआनिप्पादणस्स गमिस्सम् । (ग) (इति निष्क्रान्ता ।)

(प्रविश्य पद्मया सह)

ललिता—सहि पउमे, कुदो आअच्छसि । (घ)

पद्मा—हला, कण्हस्स सआसादो । (ङ)

ललिता—कहिं कण्हो । (च)

पद्मा—मालतीवाटिआपेरन्ते । (छ)

ललिता—किं कुणदि । (ज)

पद्मा—महुमङ्गलदुदिओ विहरदि । (झ)

ललिता—(सपरिहासस्मितम् ।) हला, किं णाम संपूरिदाहिट्ठासि । (ञ)

पद्मा—(विहस्य ।) मा अण्णधा संभावेहि । मए मालदीसेहरो एको गण्ठिअ तस्स उवहारीकिदो । (स्मृतिमभिनीय ।) हला, कधिदं मे कण्हेण—'पउमे, तुमं जधा संतदं मालं समप्पेसि, एव्वं ललिदा वि मे विचित्तढा-

---

(क) कुत्र गता ललिता ।
(ख) पश्य । पद्मया सममित एवैषा आगच्छति ।
(ग) अहमुत्पलिकानिष्पादनाय गमिष्यामि ।
(घ) सखि पद्मे, कुत आगच्छसि ।
(ङ) सखि, कृष्णस्य सकाशात् ।
(च) कुत्र कृष्णः ।
(छ) मालतीवाटिकाप्रान्ते ।
(ज) किं करोति ।
(झ) मधुमङ्गलद्वितीयो विहरति ।
(ञ) सखि, किं नाम संपूरिताभीष्टासि ।

---

अहमिति । उत्पलिका गोमयपिण्डिका ॥ सखीति । संपूरिताभीष्टासीति रतं व्यज्यते । अस्याः प्रातरेवागमनं ललितया सह सवादेच्छा च जटिलाक्रियमाण-

उलच्छीम् । ता एसा मे लेहपत्तिआ तुए तिस्सा हत्थे देअ' त्ति । (क) (इति पत्रिकामर्पयति ।)

**ललिता**—(गृहीत्वा स्वगतम् ।) कदा वि कण्हस्स मए धाउराओ ण समप्पिदोत्थि । ता एत्थ अवरेण केणावि रहस्सेण होदव्वम् । (इति प्रकाशं पत्रिकां वाचयति ।)

'त्वया मुक्तगिरिः पाणौ ममानुच्चपदस्थितिः ।
निधीयतामधीराक्षि रागिधातुपरिच्छदः ॥ २ ॥'

(इति क्षणं विमृश्य स्वगतम् ।) राधा मम पाणौ निधीयताम् । एव्वं संकेदेण इमिणा आणत्तम् । (प्रकाशम् ।) सहि, तधा करिस्सम् । ता अग्गदो राहिअं आपुच्छिअ साहेहि । (ख)

**पद्मा**—(राधिकामुपेत्य सनर्मस्मितम् ।) हला राहे, दिट्ठिआ णिव्विवादं जादम् । जधा गोउलिन्दणन्दणेण अम्हाणं अंसुआइं अवहरिदाइं तधा अम्हेहिं पि तस्स इदं पीदंसुअम् । (ग)

---

(क) मा अन्यथा संभावय । मया मालतीशेखर एको ग्रथित्वा तस्योपहारीकृतः । सखि, कथितं मे कृष्णेन—'पद्मे, त्वं यथा संततं मालां समर्पयसि, एवं ललितापि मे विचित्रधातुलक्ष्मीम् । तदेषा मम लेखपत्रिका त्वया तस्या हस्ते देया' इति ।

(ख) कदापि कृष्णस्य मया धातुरागो न समर्पितोऽस्ति । तदत्रापरेण केनापि रहस्येन भवितव्यम् । एवं संकेतेनानेनाज्ञप्तम् । सखि, तथा करिष्यामि । तदग्रतो राधिकामापृच्छ्य साधय ।

(ग) सखि राधे, दिष्ट्या निर्विवादं जातम् । यथा गोकुलेन्द्रनन्दनेनास्माकमंशुकान्यपहृतानि तथास्माभिरपि तस्येदं पीतांशुकम् ।

---

निरस्कारदुःखदर्शनाभिलाषा ॥ विमृश्येति । अयमत्र विमर्शः—त्वया मम पाणौ रागिधातुपरिच्छदो निधीयताम् । कीदृशः । मुक्तगिरिः मुक्तो गिरेः सकाशादिति राजदन्तादिः । यद्वा मुक्तो गिरिर्येन स पर्वतादवचित इत्यर्थः । अनुच्चपदस्थितिः न तुच्छे पदे पर्वताधःप्रान्तादौ स्थितिर्यस्य । उच्चस्थ इत्यर्थः । अथ प्रस्तुतोऽर्थः पद्माप्रतारणाय । गूढस्तु रागिधातुपरिच्छद इत्यक्षरात्मकरूपशब्दः । कीदृशः । मुक्ता त्यक्ता गिरा रकाराकारौ येन । न विद्यते तुच्छपदानां तुकारछकारपकारदकाराणां स्थितिर्यत्र । ततश्च 'राधा' इत्यक्षरद्वयं तिष्ठति । विपक्षस्य छलप्रतारणचातुर्यं सौभाग्यातिशयविधापनार्थम् ॥

ललिता—(स्मित्वा ।) अइ णिल्लज्जि, कुङ्कुमपङ्कपिञ्जरिदं पिअसहीए उत्तरिअं पेक्खिअ किंति अणत्थं आसङ्कसि । (क)

पद्मा—(सस्मितम् ।) हला राहे, अणुजाणीहि मम् । तुरिअं सहित्थलीं गदुअ कण्हस्स लीलं गाअन्तीं पिअसहीं चन्दाअलिअं सुहावइस्सम् । (ख)

विशाखा—(विहस्य ।) पउमे, धण्णाओ तुम्हे । जाहिं अदंसणे वि कण्हस्स विलासगीदीहिं णिअसही चन्दाअली सुहावीअदि । (ग)

पद्मा—विसाहे, तुम्हेहिं कीस तथा ण किज्जइ । (घ)

विशाखा—अइ, कुदो अम्हाणं इदि संभाव्वेअम् । (ङ)

पद्मा—हला, कधं णत्थि । (च)

विशाखा—मुद्धे, कण्हस्स णाममेत्ते पत्थुदे सही राहिआ विक्खुब्भदि । (छ)

पद्मा—(स्वगतम् ।) सपक्खे, पेमुक्करिसो इमाए विक्खाविदो । होदु । (प्रकाशम् ।) विसाहे, तुम्हे ज्जेव्व सुट्ठु सुहिणीओ । अम्हाणं क्खु कावि दुक्खदसा अणुवट्टदि । (ज)

---

(क) अयि निर्लज्जे, कुङ्कुमपङ्कपिञ्जरितं प्रियसख्या उत्तरीयं प्रेक्ष्य किमित्यनर्थं आशङ्कसि ।

(ख) सखि राधे, अनुजापय माम् । त्वरितं सखीस्थलीं गत्वा कृष्णस्य लीलां गायन्तीं प्रियसखीं चन्द्रावलीं सुखयिष्यामि ।

(ग) पद्मे, धन्या यूयम् । याभिरदर्शनेऽपि कृष्णस्य विलासगीतैर्निजसखी चन्द्रावली सुखायते ।

(घ) विशाखे, युष्माभिः कस्मात्तथा न क्रियते ।

(ङ) अयि, कुतोऽस्माकमिति संभाव्यम् ।

(च) सखि, कथं नास्ति ।

(छ) मुग्धे, कृष्णस्य नाममात्रे प्रस्तुते सखी राधिका विक्षुभ्यति ।

(ज) स्वपक्षे, प्रेमोत्कर्षोऽनया विख्यापितः । भवतु । विशाखे, यूयमेव सुष्ठु सुखिन्य. । अस्माकं खलु कापि दुःखदशा अनुवर्तते ।

---

हलेति । सखीस्थली नाम सखीधरा इति गोवर्धननिकटवर्ती चन्द्रावल्या ग्रामः ॥ मुद्धे इति । कृष्णस्य नाममात्रे प्रस्तुते सखी राधा विक्षुभ्यति । पुनो गीतश्रवणमाम-

**ललिता**—पउमे, ण क्खु तुम्हाणं किंपि दुक्खं संभाविअदि । (क)

**पद्मा**—ललिदे, मा एव्वं भण । जं हारगण्ठणकेसपसाहणबिम्बाहररञ्जणपहुदीए चन्दाअलीए णेवच्छाइ सव्वदा कुणन्तीणं अम्हाणं दुक्खजालस्स अन्तो णत्थि । (ख)

**विशाखा**—(विहस्य ।) हला पउमे, सच्चं तुम्हाणं बहुइं दुक्खाइं । अम्हाणं उण एक्कं जेव्व । (ग)

**पद्मा**—हला किं तम् । (घ)

**विशाखा**—पउमे, जा कावि मच्चदुल्लहा आगासतारा पप्फुरदि, तत्थ जादाहिलासस्स कस्सवि कालिन्दीकूलणन्दिणो समदस्स गन्धकलहिन्दस्स सव्वदा अब्भत्थणकदत्थणम् । (ङ)

---

(क) पद्मे, न खलु युष्माकं किमपि दुःखं संभाव्यते ।

(ख) ललिते, मैवं भण । यद्धारग्रथनकेशप्रसाधनबिम्बाधररञ्जनप्रभृतिभिश्चन्द्रावल्या नेपथ्यानि सर्वदा कुर्वन्तीनामस्माकं दुःखजालस्यान्तो नास्ति ।

(ग) सखि पद्मे, सत्यं युष्माकं बहूनि दुःखानि । अस्माकं पुनरेकमेव ।

(घ) सखि, किं तत् ।

(ङ) पद्मे, या कापि मर्त्यदुर्लभाकाशतारा प्रस्फुरति, तत्र जाताभिलाषस्य कस्यापि कालिन्दीकूलनन्दिनः समदस्य गन्धकलभेन्द्रस्य सर्वदाभ्यर्थनकदर्थनम् ।

---

ध्र्यम् । चन्द्रावल्यास्तथा प्रेमाभावात्तत्संभवतीति भावः ॥ ललिदे इति । अयं भावः—चन्द्रावल्याः सौभाग्यातिरेकादेकस्मिन्नपि दिने बहुशः कृष्णसंभोगेन पुनर्वेशः कर्तव्यो भवति । युष्माकं तु राधायास्तादृशसौभाग्याभावात् कदाचित्केन कृष्णसंभोगेन कदाचिदेव वेशकरणमिति ॥ विहस्येति । व्याजोऽयमुपायमेव । स स्वस्याभिलषितत्वेन दृश्यत एवेति भावः ॥ सच्चमिति । यदा चन्द्रावल्याः कृष्णसंभोग इति भवता निर्णीय व्यज्यते यद्यपि सत्यं स्यादस्तु । तदपि राधिकासौभाग्यनाशोऽस्त्येव स तु सौभाग्यासाः स्वतोऽपगत इति त्वया ज्ञायतामित्यभिप्रेत्याह—अस्माकं पुनरेकमेवेति ॥ समदस्स्येति । दुर्लभा मर्त्येष्विति परामर्शाभावान्मत्तत्वमेव । गन्धकलभेन्द्रो दुर्वारद्विरदाधिपः । अयं भावः—सुलभत्वेन चन्द्रावल्या संभोगः स्यादेवास्तु । अस्माकं राधायां तु संभोगप्रार्थनापि दुःसाध्या । कृष्णस्यातिदुर्लभत्वात् । तत्र तदर्थमस्माकं राधायामपि सदाऽभ्यर्थना तस्य अ-

**ललिता**—(स्मित्वा ।) विसाहे, अण्णं पि एक्कं गरुअं दुक्खं तुए कधं विसुमरिदम् । (क)

**विशाखा**—ललिदे, किं तं सुमरावेहि । (ख)

**ललिता**—अइ ऋज्जुए, राहाए पाअपल्लअम्मि जावअराअस्स क्खणे क्खणे विरअणम् । (ग)

**विशाखा**—(सहासम् ।) अलीआसङ्किणि ललिदे, विरमेहि विरमेहि । कण्हस्स उत्तमङ्गे धाउराओ ज्जेव्व रेहदि, ण क्खु जावआणम् । (घ)

**राधिका**—(सलज्जम् ।) हला पउमे, इमाणं दुम्मुहीणं पलावं अणाअ-ण्णिअ तुण्णं पिअसहीं चन्द्रावलिअं ज्जेव्व जाहि । (ङ)

**पद्मा**—जधा आदिसदि पिअसही । (च) (इति निष्क्रान्ता ।)

**ललिता**—(स्वगतम् ।) एण्हिं कण्हस्स आण्णां करिस्सम् । (प्रकाशम् ।) हला राहे, एहि । पुप्फं अवचिणिअ भअवन्तं सूरं पूएम्ह । (छ)

---

(क) विशाखे, अन्यदप्येकं गुरु दुःखं त्वया कथं विस्मृतम् ।

(ख) ललिते, किं तत्स्मारय ।

(ग) अयि ऋजुके, राधाया पादपल्लवे यावकरागस्य क्षणे क्षणे विरचनम् ।

(घ) अलीकाशङ्किनि ललिते, विरम विरम । कृष्णस्योत्तमाङ्गे धातुराग एव राजते, न खलु यावकानाम् ।

(ङ) सखि पद्मे, आसां दुर्मुखीनां प्रलापमनाकर्ण्य तूर्णं प्रियसखीं चन्द्रावलीमेव याहि ।

(च) यथादिशति प्रियसखी ।

(छ) इदानीं कृष्णस्याज्ञां करिष्यामि । सखि राधे, एहि पुष्पमवचित्य भगवन्तं सूर्यं पूजयाम ।

---

यति तामपि कदर्थनमस्माभिर्मन्यते ॥ **स्मित्वेति** । विशाखे, सुष्ठु प्रत्युक्त भवत्या इति भावः । अहमितोऽप्युत्कृष्टकोटिमाविष्कृत्य वराकीमिमां निर्वचनीकरोमीत्यभिप्रेत्याह—अण्णं पि एक्कमिति ॥ **अयीति** । ऋजुस्वभावत्वात् सूक्ष्ममर्थं प्रकाश्य नेमां लम्भयसीति भावः । अय भावः—ततश्च सामदानादिभिश्चाटुपरेण कृष्णेन वशीकृतास्माभिरवसरे दत्ते राधिकायाः पादयोः प्रणामेन यावकरागः क्षणे क्षणेऽपगतो भवतीति भावः ॥ **सहासमिति** । अयास्याः प्रत्युत्तरस्य का गतिर्भविष्यतीति भावः । कृष्णस्योत्तमाङ्गे धातुरागो राजते, न खलु यावकानामिति प्रकाशितार्थस्य पुनः संगोपेनाधिकं घनिर्धारं सलज्जं व्यञ्जितमिति ॥ **सलज्जमिति** । आत्मयशश्रवणेन ॥ अथेमां निरस्तां म्लान-

**राधिका**—(स्वगतम्।) दिट्ठिआ हिअअट्ठिदो जेव्व मे कामो इमाए उवणीदो, जं कण्हस्स दंसणं एत्थ संभवे। (प्रकाशम्।) जधा हि रोअदि पिअसहीए। (क) (इति निष्क्रान्ता।)

(ततः प्रविशति मधुमङ्गलेनोपास्यमानः कृष्णः।)

**कृष्णः**—

तव स्तबकवल्लरीचटुलगन्धबन्दीकृत-
भ्रमद्भ्रमरझंकृतिप्लुतमुदग्रगुञ्जार्बुदम्।
शरत्कृशकलिन्दजापुलिनवृन्दसंवर्धितं
परिस्फुरति चन्द्रकस्थगितमद्य वृन्दावनम्॥ ३॥

(पुनर्निरूप्य। सानन्दम्।)

शरदि मुखरिताशास्तारनादावलीभि-
र्वलदविचलनेत्राः पश्य वृन्दावनेऽद्य।
विदधति रणरङ्गं वासिता सङ्गहेतोः
सरभसमुरुशृङ्गैः सङ्गवे पुंगवेन्द्राः॥ ४॥

**मधुमङ्गलः**—(सर्वतो विलोक्य।)

तुह संगमेण णूणं मुउन्द वुन्दाडई घणच्छाआ।
उअ दम्भेण कुरण्टअभरस्स पीदम्बरं धरइ॥ ५॥ (ख)

**कृष्णः**—(स्वगतम्।) किमद्य निष्टङ्कितसंकेतलेखार्थया पूर्णमनोरथीकरिष्येऽहं ललितया। हन्त, शारदमाधुरीसंदोहसंदानितापि वृन्दाटवीकक्षा

(क) दिष्ट्या हृदयस्थित एव मम कामोऽनयोपनीत, यत्कृष्णस्य दर्शनमत्र संभवेत्। यथा ह्यभिरोचते प्रियसख्यै।

(ख) तव संगमेन नूनं मुकुन्द वृन्दाटवी घनच्छाया।
उत दम्भेन कुरण्टकभरस्य पीताम्बरं धरति॥

मुरली दृष्ट्वा आह—**हला पउमे इत्यादि**॥ **तवेति**। वायुना चञ्चलगन्धेन बन्दीकृतः बन्दी स्तावकस्तदिव कृतो यो भ्रमद्भ्रमरस्तस्य झंकृत्या प्लुतं व्याप्तम्। अथवा बन्दीकृतो बद्धीकृतः। उदग्राणामुत्कृष्टाना गुञ्जानामर्बुदं यत्र। चन्द्रकैर्मयूरपिच्छैः स्थगितं संवृतम्। व्याप्तमिति यावत्। 'स्थगि संवरणे' धातुः॥ **शरदीति**। मुखरिता नादिता आशा दिशो यैः। वासिता पुष्पिणी गौः॥ **तुहेति**। घनच्छायापक्षे त्वत्सारूप्यप्राप्त्या मेघकान्तिः॥ **किमद्येत्यादि**। संदानिता बद्धा। शरदि यत्र कुत्रापि सज्जनसंचारं विना

सञ्जनाक्षी विप्रकर्षादानन्दबिन्दुमपि न मे सदधाति । तद्वेणुसकेत सचारयामि । (इति तथा कुर्वन् ।)

दिव्यो रथाङ्गि समय सखि सगमस्य
जज्ञे वराङ्गि तरसा कुरु पक्षपातम् ।
अध्वानमर्धनयनेन विलोकमान
शोकादय सहचरस्तव रौरवीति ॥ ६ ॥

मधुमङ्गलः—भो वअस्स, किं एद अउरुव्व वादिदम् । (क)

कृष्णः—सखे, कुरङ्गीलोकनार्थं ममायमुद्यम ।

मधुमङ्गलः—सच्च कधिदम् । किं तु एक्क अक्खर अण्णधा किअम् । (ख)

कृष्णः—सखे, साधु विदित कुरङ्गीलोचनार्थमेव ।

(नेपथ्ये ।)

पिबन्तीना वशीरवमिह गवा कर्णचुलुकै
पय पूरा दूराद्दिशि दिशि तथा शुश्रुवुरमी ।
अकाले पुष्पद्भिस्तरुभिरभित शोभितमिद
यथा वृन्दारण्य दधिमयनदीमातृकमभूत् ॥ ७ ॥'

कृष्णः—सखे, दक्षिणत पश्य पश्य ।

तुङ्गस्ताम्रोरुशृङ्ग स्फुरदरुणखुरो रम्यपिङ्गेक्षणश्री
कण्ठव्यालम्बिघण्टो धरणिविलुठितोच्चण्डलाङ्गूलदण्ड ।
सोऽय कैलासपाण्डुद्युतिरतुलककुन्मण्डलो नैचिकीना
चक्रे भाति प्रियो मे परिमलतुलितोत्फुल्लपद्म ककुद्मी ॥ ८ ॥

(क) भो वयस्य, किमेतदपूर्व वादितम् ।

(ख) सत्य कथितम् । किं त्वेकमक्षरमन्यथा कृतम् ।

दाभेव नोपयत इति खञ्जनाक्षीपदैकदेशव्याख्य वस्तु । हे रथाङ्गि चक्रवाकि, व्यपदेशेन हे राधे । रौरवीति अत्यर्थं जल्पति । रोदितीत्यर्थ ॥ पिबन्तीनामिति । पय प्रवाह्य तथा शुश्रुवुर्यथाकालेऽपि पुष्पद्भिस्तरुभि शोभित सत् वृन्दारण्य दधिमय नदीमातृकम भूत् । अयमर्थ —वशीश्रवणेन गवा दुग्धप्रवाहास्तरूणां पुष्पाणि च युगपदभूत् । ततश्च पुष्पाणामम्लरससम्पर्केण दुग्धानि दधीनि बभूवुरिति । 'पुष्प विकसने' धातु ॥ तुङ्ग इति । परिमलतुलित इति पद्मगन्धनामाय वृष । तथा चोक्तम्—पद्मगन्धा सुगन्धश्च बलीव

(ततः प्रविशति सखीभ्यामनुगम्यमाना राधा ।)

**राधा**—(स्वगतम् ।) जदो दिसादो वेणुसद्दो आअदो, सा दिसा मोहिदाए मए ण संभाविदा । (क)

**ललिता**—(सोत्प्रासस्मितम् ।) हला राहिए, कीस अकण्डे हरिणकण्णी तुमं जादासि । (ख)

**राधिका**—ललिदे, किंति अप्पणो धम्मं परस्स अप्पेसि । सच्चं तुमं ज्जेव्व हरिणी, जं कलसद्देण हरिज्जन्ती दीससि । (ग)

**ललिता**—राहे, तुमं क्खु हरिणी, जं रङ्गिणी णाम हरिणी तुम्ह सही । (घ)

**राधिका**—(स्वगतम् ।) दिट्ठिआ एसा कावि सोरब्भधारा वाडिआ दोदूदीव्व मं आअड्ढदि । (ङ) (इति सव्याजं पुरः प्रयाति ।)

**विशाखा**—(स्मित्वा ।) हला राहि, कीस तुमं भङ्गीव गन्धं सप्पसि । (च)

**राधिका**—विसाहे, अग्गदो फुल्लाइं कुसुमाइं दीसन्ति । ता एदाइं घेत्तुण तम्मित्तं पूअइस्सम् । (छ)

---

(क) यतो दिशातो वेणुशब्द आयातः, सा दिशा मोहितया मया न संभाविता ।

(ख) सखि राधे, कस्मादकाण्डे हरिणकर्णी त्वं जातासि ।

(ग) ललिते, किमित्यात्मनो धर्मं परस्यार्पयसि । सत्यं त्वमेव हरिणी, यत्कलशब्देन हरिष्यमाणा दृश्यसे ।

(घ) राधे, त्वं खलु हरिणी, यद्रङ्गिणी नाम हरिणी तव सखी ।

(ङ) दिष्ट्या एषा कापि सौरभ्यधारा वाटिका ·········मामाकर्षति ।

(च) सखि राधे, कस्मात्त्वं भृङ्गीव गन्धं सर्पसि ।

(छ) विशाखे, अग्रतो फुल्लानि कुसुमानि दृश्यन्ते । तदेतानि गृहीत्वा तन्मित्रं पूजयिष्ये ।

---

दावितिप्रियौ' इति ॥ **हलेति** । सर्पसि । अन्वेषयसीत्यर्थः ॥ **विसाहे इति** । मित्रम् । सूर्यमि-

**ललिता**—सच्चं मित्तस्स अणुराअं तुमं तरलेदि। सो दाव गहणचरस्स ज्जेव ण क्खु गअणचरस्स । (क)

**राधिका**—(सप्रणयरोषम् ।) अइ अदक्खिणे, कमलवन्धुं कधेमि। (ख)

· **ललिता**—सहि, कीस आआरं संगोवेसि । (ग)

**विशाखा**—ललिदे, सवत्तीभाएण ईसा च्चेअ संगोवेदि । ण उण प्पिसही । (घ)

**राधा**—(सभ्रूभङ्गम् ।) अइ वामे, अत्तणो हिअअट्ठिदं अत्थं परमुण्डे कीस पाडेसि । ता तुवरेहि । जाणादि दूरे ज्जेव सो तुम्हाणं बिम्बाहरकण्डूखण्डणो । (ङ)

**ललिता**—राहे, आकोमारं अम्हाणं अक्खुडिदं कुलङ्गणाव्वदं वुन्दावणलदाओ ज्जेव्व जाणेन्ति । ता अत्तणो मुहेण किं कधइस्सम्ह । (च)

**राधिका**—(विहस्य ।) अइ पइव्वदे, जाणेन्ति जाणेन्ति । तदो ज्जेव कल्ले तुह भुअवल्लिणो अङ्के सकंमिदं दिट्ठं मए मअरकुण्डललञ्छणं। तधा ज्जेव विसाहाए तत्थ तुलिओवरि क्खुडिदं सिहण्डकिरीडम् । (छ)

---

(क) सत्यं मित्रस्यानुरागस्त्वां तरलयति । स तावद्गहनचरस्यैव न खलु गगनचरस्य ।

(ख) अय्यदक्षिणे, कमलवन्धुं कथयामि ।

(ग) सखि, कस्मादाकारं संगोपयसि ।

(घ) ललिते, सपत्नीभावेनेर्ष्यैव संगोपयति । न पुनः प्रियसखी ।

(ङ) अयि वामे, आत्मनो हृदयस्थितमर्थं परमुण्डे कस्मात्पातयसि । तत्त्वरय । जानाति दूर एव स युष्माकं बिम्बाधरकण्डूखण्डनः ।

(च) राधे, आकौमारमस्माकमस्खलितं कुलाङ्गनाव्रतं वृन्दावनलता एव जानन्ति । तदात्मनो मुखेन किं कथयिष्यामः ।

(छ) अयि पतिव्रते, जानन्ति जानन्ति । तत एव कल्ये तव भुजलतया अङ्के संक्रान्तं दृष्टं मया मकरकुण्डललाञ्छनम्। तथैव विशाखया तत्र तूलिकोपरि स्खलितं शिखण्डकिरीटम् ।

---

स्यर्थः ॥ सहीति । आकारमिङ्गितं संगोपयसि, पक्षे आ इति अक्षरं संगोपयसि न वदसि। कमलवन्धुमिति प्रकट एव न वदसीत्यर्थः ॥ सपत्नीभावेनेर्ष्यैव संगोपयति। न पुनः प्रियसखी। लक्ष्म्या सह सपत्न्या तदीर्ष्यया तन्नामानुच्चारणादित्यर्थः ॥ अयीति। कल्ये प्रातः ॥

ललिता—(स्मित्वा।) परपरिवादिणि, अवेहि अवेहि। (क)

विशाखा—राहे, कित्तियं च्छम्पिस्ससि। ण क्खु चन्दालोए चन्दकन्तसिला अप्पसिण्णा होदुं पहुवदि। (ख)

राधिका—(पुरो दृष्ट्वा सचमत्कारम्।) ललिदे, तूण्णं अणुजाणेहि। पलाइस्सम्। (ग) (इत्युत्कम्पते।)

ललिता—(साशङ्कम्।) राधे, कीस भाएसि। (घ)

राधिका—(साभ्यसूयम्।) अइ वङ्के, अलं इमिणा उज्जुअत्तणेण। णूणं इमस्स लम्पडस्स हत्थे पक्खेदुं मं दूरे आणीदासि। (ङ)

ललिता—(निपुण निभाल्य स्वगतम्।) णूणं दूरदो विलोइज्जन्तं तमालं जेव्व इअं कण्हं मण्णेदि। (प्रकाशम्।) हुं, दाणिं कधं पलाइस्ससि। लद्धो मए ओसरो। (च) (इति राधामाकर्षति।)

राधिका—(सकातर्यम्।) सहि विसाहे, परित्ताहि परित्ताहि। सरणाअदम्हि। (छ)

विशाखा—अइ पेम्मुब्भमिदे, कधं तिल्लोकं जेव्व दे कण्हएदि। पेक्ख एसो पसाली, ण क्खु तुज्झ विलासी। (ज)

कृष्णः—कथं नेदानीमपि प्रत्यासन्ना तन्वङ्गी। तन्मुरलीमीरयामि। (इति तथा कुर्वन्।)

---

(क) परपरिवादिनि, अपेहि अपेहि।

(ख) राधे, कियदाच्छादयसि। न खलु चन्द्रालोके चन्द्रकान्तशिला अप्रस्विन्ना भवितुं प्रभवति।

(ग) ललिते, तूर्णमनुज्ञापय। पलायिष्यामि।

(घ) राधे, कस्माद्बिभेषि।

(ङ) अयि वक्रे, अलमनेन ऋजुकत्वेन। नूनमस्य लम्पटस्य हस्ते प्रक्षेप्तुं मां दूरे आनीतासि।

(च) नूनं दूरतो विलोक्यमानं तमालमेवेयं कृष्णं मन्यते। हुं, इदानीं कथं पलायिष्यसि। लब्धो मयावसरः।

(छ) सखि विशाखे, परित्रायस्व परित्रायस्व। शरणागतास्मि।

(ज) अयि प्रेमोद्भ्रान्ते, कथं त्रैलोक्यमेव ते कृष्णायते। पश्यैष पलाशी, न खलु तव विलासी।

अयि सुधाकरमण्डलि मण्डय त्वमटवीं मृदुपादविसर्पणैः ।
उदयशैलतटीनिहितेक्षणो ननु चकोरयुवा परितप्यते ॥ ९ ॥

विशाखा—(स्वय धैर्यमवष्टभ्य ।) हला राहे, कीस तुमं भमन्ती कलम्बं ओलम्बेसि । (क)

ललिता—सहि वंसिए, वारंवारं तुमं वन्देमि । जं उग्घाडिदरहस्सा तुए राही किदा । (ख)

(राधिका सलज्जमवहित्थां नाटयति ।)

ललिता—(संस्कृतेन ।)

विशद्भिः कर्णान्ते तव विस्मरैरद्य मुरली-
कलैरूरुस्तम्भो गुरुरजनि रम्भोरु तरसा ।
विलुप्ताभूद्दृष्टिर्नयनजलवृष्टिव्यतिकरैः
प्रणीताभिर्यत्नात्तदलमवहित्थालहरिभिः ॥ १० ॥

विशाखा—ललिदे, को दाणिं अवहित्थाए ओसरो । (ग) (इति संस्कृतेन ।)

अपाभिचरणक्रमे परमसिद्धिराथर्वणी
स्मरानलसमिन्धने सपदि सामिधेनीध्वनिः ।
तथात्मपरमात्मनोरुपनिषन्मयी संगमे
विलासमुरलीभवा विरुतिरद्य वैरायते ॥ ११ ॥

---

(क) सखि राधे, कस्मात्त्वं भ्रमन्ती कदम्बमवलम्बसे ।

(ख) सखि वंशिके, वारंवारं त्वां वन्दयामि । यदुद्घाटितरहस्या त्वया राधा कृता ।

(ग) ललिते, क इदानीमवहित्थाया अवसरः ।

---

**अयीति** । सुधाकरमण्डलि हे चन्द्रमण्डलि, अपदेशेन हे राधे । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः । पादविसर्पणैः किरणप्रसारणैश्चरणसञ्चालनैश्च ॥ कदम्बमवलम्बसे ॥ **अपाभिचरणेति** । अपाभिचरणक्रमोऽथर्ववेदोक्तसिद्धिः । अथर्ववेदस्याभिचारप्रायत्वात् । स्मरानलस्य समिन्धने ज्वालने सामिधेनीध्वनिः सामिधेनीमन्त्रपाठः । 'ऋक्सामिधेनी धाय्या चर्या स्यादग्निसमिन्धने' इत्यमरः । आत्मपरमात्मनोः संगमे एकीकरणे उपनिषन्मयी तत्त्वमसीतिवाक्यमयी । तथा च लब्धाश्रय धर्मोद्रेक प्रेमम् '' च करोतीत्यर्थः । वैरायते । वैरं करोतीत्यर्थः । 'शब्दवैरकलहाभ्रक एव मेघेभ्यः करणे' इति

राधिका—(सक्षोभम् ।) सहि, सच्चं कधेसि । अम्हाणं वइरिणी संवुत्ता दारुणी वंसिआ । ता उवालइस्सम् । (क) (इति संस्कृतेन ।)

सूतिस्ते धनुषश्च वंशवरतो वन्दे तयोरन्तिमं
विद्धो येन जनस्तनुं विहरयन्नान्तश्चिरं ताम्यति ।
विद्धानां हृदि मारपत्रिविषमैर्ध्वानेषुभिर्नस्त्वया
क्रूरे वंशि न जीवनं न च मृतिर्घोराविराशीदृशा ॥ १२ ॥

कृष्णः—(पुरो विलोक्य सानन्दम् ।)

भविता सविधेऽत्र राधिका यदियं रिङ्गति रङ्गिणी पुरः ।
मृगलाञ्छनलेखयेव या मृगमूर्तिर्न तया वियुज्यते ॥ १३ ॥

(पुनर्निरूप्य ।) सखे, ज्ञातं ज्ञातम् । नासौ राधिकान्यङ्कुः । यदयं निरङ्को नेदीयानिन्दुः । (इति विस्मयमभिनीय ।)

अङ्कात्परित्यज्य पुरः कुरङ्गं शङ्के सुधांशुर्भुवमाससाद ।

(पुनर्निभाल्य ।)

आं ज्ञातमुत्फुल्लविलासवृन्दैरानन्दि राधावदनं चकास्ति ॥ १४ ॥

(इत्यग्रे सरति ।)

मधुमङ्गलः—(सपरिहासम् ।) भो वअस्स, मा धाव । लहुं जाहि । अहवा तुमं किंति दूसिज्जसि, जं धुत्तकिसोरीहिं दुट्ठमन्तेण उम्मादिदोसि । ता इमस्सिं जोग्गे ओसरे तुमं णिवारिअ सिणेहस्स णिकिदं करिस्सम् । (ख) (इति पाणिमादधाति ।)

---

(क) सखि, सत्यं कथयसि । अस्माकं वैरिणी संवृत्ता दारुणा वंशिका । तदुपालप्स्यामि ।

(ख) भो वयस्य, मा धाव । लघु याहि । अथवा त्वं किमिति दूषिष्यसि, यो धूर्तकिशोरीभिर्दुष्टमन्त्रेणोन्मादितोऽसि । तदस्मिन्योग्येऽवसरे त्वां निवार्य स्नेहस्य निकृतं करिष्यामि ।

---

निद् ॥ सूतिरिति । वंशवरतः राकाशात्ते तव एव धनुषश्च सूतिरुत्पत्तिस्तयोरन्तिमं धनुर्वन्दे, येन विद्धः सन् तनुं विहरयन् त्यजन् सन् चिरकालं नान्तस्ताम्यति । त्वया विद्धानां त्वस्माकं न जीवनं न च मृतिः । धैर्विद्धानाम् । ध्वानेषुभिः ध्वाना एव इषवस्तैः । कीदृशैः । मारपत्रिभ्यः कन्दर्पबाणेभ्योऽपि विषमैः ॥ भवितेति । यदियं रङ्गिणी रिङ्गति, ततो राधिका सविधे निकटे भवितेत्यनुमानम् । तया राधिकया रङ्गिणी न वियुज्यते ।

कृष्णः—सखे, साधु चेष्टसे यदद्य राधिकोपसर्पणे कम्पेन कृतविभ्रमस्य मे दत्तहस्तावलम्बोऽसि । (इति परिक्रम्य ।)

इयमतितृषितं वरानुरागोज्ज्वलसुमनाः कमनीयपत्रलेखा ।
मम वरतनुराचकर्ष चित्तं मधुपमशोकलतेव पुष्पिताग्रा ॥ १५ ॥

राधिका—(कृष्णमपाङ्गेन विलोक्य । स्वगतम् । संस्कृतेन ।)

नवमनसिजलीलाभ्रान्तनेत्रान्तभाजः
स्फुटकिसलयभङ्गी सङ्गिकर्णाञ्चलस्य ।
मिलितमृदुलमौलेर्मालया मालतीनां
मदयति मम मेधां माधुरी माधवस्य ॥ १६ ॥

विशाखा—(विहस्य । संस्कृतेन ।)

वशीचक्रे कृष्णस्तव परिमलैरेव वलिभि-
र्विलासानां वृन्दं कथमिव मुधा कन्दलयसि ।
जये पाणौ दत्ते रणपटुभिरग्रेसरभटैः
स्वयं को विक्रान्तिं पुनरिह जिगीषुः प्रणयति ॥ १७ ॥

राधिका—अइ दुम्मुहि, पत्तिअम्मि संकडे मं आरोविअ अज्जवि ण विस्सन्तासि । ता णिक्किवहिअअं तुमं उज्झिअ अहं सिणिद्धपिअसहीं ललिदं सरणं पविसामि । (क) (इति तथा कृत्वा संस्कृतेन ।)

अत्रायान्तं चलमपि हरिं लोकयन्ती वलिष्ठां
त्वामालम्ब्य प्रियसखि घने नास्मि कुञ्जे निलीना ।

---

(क) अयि दुर्मुखि, ···संकटे मामारोप्याद्यापि न विश्रान्तासि । तन्निष्कृपहृदयां त्वामौज्झ्याहं स्निग्धप्रियसखीं ललितां शरणं प्रविशामि ।

---

मृगमूर्तिर्मृगाङ्कनिर्मृगलाञ्छनलेखयेव ॥ सखे इति । न्यङ्कुर्हरिणी ॥ इयमिति । वरानुरागेणोज्ज्वल प्रेममय शोभन मनो यस्याः, पक्षे अनुगतरक्तिम्ना उज्ज्वलानि सुमनांसि यस्याः । कमनीयानां पत्राणां लेखा श्रेणी यस्यां च ॥ नवेति । मेधां धारणावतीं बुद्धिं मदयति । धारणावत्या बुद्धेर्मत्ततया स्थित्वा निष्क्रमितुं शक्या न भविष्यति शोभेयमिति भावः ॥ वशीचक्रे इति । विलासानां बिब्बोकविभ्रमादीनां वृन्दं मुधा व्यर्थं कन्दलयसि प्रकाशयसि ॥ अत्रायान्तमिति । त्वां बलिष्ठामालम्ब्य आश्रित्य चलं चपलं हरिं

**ललिता**—(सनर्मस्मितम्। सस्कृतेन।)

> असान्मुग्धे हृदयनिहितादद्य पीताम्बरात्ते
> शक्तो नान्यः कुचपरिचये मत्पुरो मा व्यथिष्ठाः ॥ १८ ॥

**कृष्णः**—(सानन्दम्।) कल्याणि, काले लब्धासि। (इति राधामनुसर्पति।)

**ललिता**—(साटोप परिक्रम्य कृष्ण वारयन्ती।) छइल्ल, ण हु एसा तुम्ह परिहासजोग्गा अम्हाणं पिअसही। ता अवेहि। (क)

**कृष्णः**—(सस्मितम्।) ललिते, नेदं गोष्ठाङ्गनम्। पश्य वृन्दाटवीकुक्षिरसौ। तत्रेह वः प्रभविष्णुता।

**ललिता**—कण्ह, अस्साओ ताओ क्खु मुद्धिआओ जाओ तुअत्तो वि सुट्ठु भाएन्ति। एसम्हि पसिद्धा ललिदा। (ख)

(राधिका चलापाङ्गेन कृष्ण विलोक्य कम्प नाटयति।)

**ललिता**—राहे, कीस सज्झसेण कम्पसि जं एसा जीअदि ललिदा। (ग)

**राधिका**—ललिदे, गहिदाइं बन्धूगपुप्फाइं। ता एहि। कालिन्दीतीरं गच्छम्ह। (घ)

**कृष्णः**—कठोरे, कथमाहृतबन्धुजीवा विदूरं गन्तुमुद्यतासि। (इति पन्थानमारुण्वन्।)

> परीतं शृङ्गेण स्फुटतरशिलाश्यामलरुचं
> चलद्वेत्रं वंशव्यतिकरलसन्मेखलममुम्।

---

(क) विदग्ध, न खल्वेषा तव परिहासयोग्या अस्माक प्रियसखी। तदपेहि।

(ख) कृष्ण, वय ता खलु मुग्धिका याः त्वत्तोऽपि सुष्ठु बिभ्यति। एषास्मि प्रसिद्धा ललिता।

(ग) राधे, कस्मात्साध्वसेन कम्पसे यदेषा जीवति ललिता।

(घ) ललिते, गृहीतानि बन्धूकपुष्पाणि। तदेहि। कालिन्दीतीरं गच्छाम।

---

लोकयन्ती पश्यन्त्यपि सतीत्यर्थ। हृदये निहितादुपरि प्रकट भावनया चार्पितात्पीताम्बरात्पीतवस्त्रात् कृष्णाच्च ॥ **कठोर इति**। आहृतबन्धुजीवा मदुद्यानस्थबन्धुजीवपुष्प हृत्वा। चोरयित्वेत्यर्थ.। पक्षे आहृतो बन्धोर्मम जीव आत्मा यथा तथाभूता भूत्वेत्यर्थः ॥ **परीतमिति**। शृङ्गेण पर्वताग्रेण, वाद्यभेदेन च। शिलाभि. शिलेव च श्यामला

अतिक्रम्योत्तुङ्गं धरणिधरमग्रे कथमित-
स्त्वया गन्तुं शक्या तरणिदुहितुस्तीरसरणीम् ॥ १९ ॥

**राधिका**—(वक्र विलोक्य हुकुर्वती ।) णाअर, मम दोसो णत्थि । दाणिं एसा गोउलेसरिं अणुसरिस्सम् । (क)

**कृष्णः**—राधे, किं विभीषिकया ? कामं गम्यताम् । तद्भुजमूलस्थं पीतदुकूलमेव ममानुकूलम् । (इति राधां दिधीर्षति ।)

**राधिका**—(भ्रुकुटीमाबध्य । संस्कृतेन ।)

साध्वीनां धुरि धार्या ललितासङ्गेन गर्विता चास्मि ।
हितमालपामि माधव पथि माद्य भुजङ्गतां रचय ॥ २० ॥

**कृष्णः**—ललिते, किमश्रावि वाग्भङ्गिरस्याः । तदहं नापराध्यामि । (इति भुजदण्डावुद्दण्डयति ।)

**ललिता**—(राधा पृष्ठत' कृत्वा ।) कण्ह, सव्वलोअसलाहणिज्जगुणोवि तुमं गोउलिन्दस्स णन्दणोसि । ता णेदं दे दुल्लीलतणं अम्हेसु जोग्गम् । (ख)

**मधुमङ्गलः**—अइ गव्विदे, किंति वुन्दाअणं विद्धंसिअ तुम्हेहिं अम्हपिअवअस्सस्स पुप्फाइं हरिस्सन्ति । (ग)

---

(क) नागर, मम दोषो नास्ति । इदानीमेषा गोकुलेश्वरीमनुसरिष्यामि ।

(ख) कृष्ण, सर्वलोकश्लाघनीयगुणोऽपि त्वं गोकुलेन्द्रस्य नन्दनोऽसि । तन्नेदं ते दुर्लीलत्वमस्मासु योग्यम् ।

(ग) अयि गर्विते, किमिति वृन्दावनं विध्वस्य युष्माभिरस्मत्प्रियवयस्यस्य पुष्पाणि ह्रियन्ते ।

---

रुचिर्यस्य । चलन्ति कम्पवन्ति चेत्राणि चलच्चञ्चल चेत्र च यस्य तम् । वशाव्यतिकरैर्वंशशृक्षसमूहैर्लसन्ती मेखला यस्य, वशाव्यतिकरेण वशीसमीलनेन लसन्ती मेखला क्षुद्रघण्टिका यस्य च । धरणिधर पर्वत कृष्ण च ॥ **राधे इति** । अनुकूलमिति । मम पीताम्बरमाच्छिद्यानया नीतम् । मम को दोष इति मयापि तस्मादतो निवेद्य पीताम्बरमिदमाकृष्य गृह्णामि । ततस्त्व निरुत्तरीया पातु न प्रभविष्यसीति भाव । यद्वा मदायपीतवस्त्रयुक्ता लज्जयैव तत्र गमने न शक्तिरिति भाव ॥ **साध्वीनामिति** । साध्वीनां पतिमतानां सुन्दरीणां च धुरि । चिन्तनेन गणनीयेत्यर्थं । धार्या गणनीया । ललितायाः सङ्गेन ललित शोभनो य आसङ्ग आसक्तिस्तेन च गर्वितास्मि । अत एवाद्य पथि भुजङ्गतां धामुकतां मा रचय । पक्षे मा मां भुजगतां हस्तगतां रचय कुरु ॥ **ललित इति** ।

**कृष्णः**—सखे, तूर्णं गणयासां पुष्पाणि यथा तत्संख्यया कण्ठतो हारमणीनाहरामि।

**मधुमङ्गलः**—पिअवअस्स, किं गणणं। ता रत्ताणं पुप्फाणं परिवट्टेण पउमरागाइं गेण्ह। पण्डराणं उण हीरमौत्तिमाइं। (क)

**कृष्णः**—सखे, पर्यालोचयम्। नामूनि पुष्पमूल्यतुल्यानि। ततः कतिभिरेव पर्याप्तिः।

**मधुमङ्गलः**—(सकाकुप्रपञ्चम्।) वअस्स, एसो अणुग्गइदो बम्हणो अब्भत्थेदि। ता इमेहिं ज्जेव्व संतुट्ठो होहि। (ख)

**कृष्णः**—यथा ब्रवीति वयस्यः।

**ललिता**—(विहस्य।) अज्ज, सामिणो जोग्गो ज्जेव्व अमच्चोसि। (ग)

**विशाखा**—(अलीकसंभ्रमम्।) कण्ह, दूरे चिट्ठेहि। (घ)

**कृष्णः**—कुटिले, किमिति।

**विशाखा**—पेक्ख। संरम्भेण संगरंगमिदा चन्दहासं उल्लासेदि अम्हपिअसही राहा। (ङ)

**कृष्णः**—(स्मित्वा।) मुग्धे, पश्य। अहं च प्रपञ्चितगाढरोमाञ्चकञ्चुकोऽस्मि। तदयत्नं रामारत्नं हरिष्यामि। (इति राधामनुसर्पति।)

---

(क) प्रियवयस्य, कृत गणनम्। तद्रक्ताणां पुष्पाणां परिवर्तेन पद्मरागाणि गृहाण। पाण्डुराणा पुनर्हीरमौक्तिकानि।

(ख) वयस्य, एषोऽनुगृहीतो ब्राह्मणोऽभ्यर्थयति। तदेतैरेव सतुष्टो भव।

(ग) आर्य, स्वामिनो योग्य एवामात्योऽसि।

(घ) कृष्ण, दूरे तिष्ठ।

(ङ) पश्य। संरम्भेण संगरं गमिता चन्द्रहासमुल्लासयत्यस्मत्प्रियसखी राधा।

---

धाग्भङ्गिः स्वय दौत्यम्॥ पेक्खेति। सरम्भेण कोपावेशेन रसावेशेन च। हेतौ कर्तरि करणे च तृतीया। सगरं युद्ध गमिता प्रापिता। सङ्गरङ्ग सङ्गे निमित्ते रङ्गमौत्सुक्यम् इता प्राप्तेति च। चन्द्रहास खड्ग चन्द्रतुल्य हास च। उल्लासयति उत्क्रामयति प्रकाशयति च॥ मुग्धे इति। कञ्चुक वचचम्। रामाया रत्न रामास्परत्न च॥ सखे इति। भैर-

ललिता—(सरम्भमभिनीय ।) कण्ह, पेक्खामि दे साहसं । राहिए छाअं पि तुमं फंसेहि । (क)

कृष्णः—सखे, नूनं ललितारूपेण महाभैरवीयं प्रादुर्भूता ।

राधिका—हला, कल्लाणी होहि । (ख) (इति ललिता साकूतमालिङ्गति ।)

कृष्णः—(जनान्तिकम् ।) ललिते, विमुञ्च काठिन्यम् ।

ललिता—उक्कोअं मे देहि । (ग)

कृष्णः—(स्मित्वा ।) ललिते, सत्यं ते ब्रवीमि राधामपि विप्रलभ्य सायमनङ्गसंगरे त्वामेव प्रतिरीरयिष्ये ।

ललिता—(सरोष पराद्दत्य ।) अवेहि विदूसक, अवेहि । (घ)

कृष्णः—कथयोत्कोचं यत्र ते तुष्टिः ।

ललिता—णाअर, पुप्फमग्गणरङ्गेण वुन्दावणं भम्मन्ती दूमेदि मे सही । ता दिव्वपुप्फेहिं णं अलंकदुअ सुहावेहि । (ङ)

कृष्णः—(स्मित्वा ।) यथाभिरोचते तुभ्यम् । (इति परिक्रम्य । दर्वारभटीं नाटयन् ।) ललिते, बाढं विक्रुश्यताम् । न त्वां तृणाय मन्ये । (इति राधिका-हारमाक्रष्टुं कर प्रसारयति ।)

ललिता—(वाम विलोक्य । सस्मितम् ।) छइल्ल, सूरदेअपूआकिदे किद-सिणाणं पिअसहीं अकिदसिणाणो क्खु तुमं मा फंसेहि । (च)

---

(क) कृष्ण, पश्यामि ते साहसम् । राधायाश्छायामपि त्व स्पृश ।

(ख) हला, कल्याणी भव ।

(ग) उत्कोच मे देहि ।

(घ) अपेहि विदूषक, अपेहि ।

(ङ) नागर, पुष्पमार्गणरङ्गेण वृन्दावनं भ्रमन्ती दूयते मे सखी । तद्दिव्यपुष्पै-रेनामलङ्कृत्य सुखय ।

(च) विदग्ध, सूर्यदेवपूजाकृते कृतस्नाना प्रियसखीमकृतस्नानः खलु त्व मा स्पृश ।

---

वीति । अस्या पतिमन्यो भैरव इति परिहास. ॥ ललिते इति । प्रतिरीरयिष्ये प्रति-योदीरयिष्ये ॥ णाअर इति । पुष्पमार्गणरङ्गेण अन्वेषणाभिलापेण, पुष्पमार्गण. कन्द-

**कृष्णः**—अयि मदान्धे, समन्तादुल्लासिनि प्रस्वेदाम्बुपूरे मयि कथं कृतमहाभिषेकं न पश्यसि ।

**ललिता**—(राधामन्तरयन्ती समान्यर्थम् ।) हला, उद्दण्डकालतमालघोलेण वणखण्डेण इमस्स पअण्डदा दूसहा किदा । ता अम्हेहारं रक्खिदुं क्खणं सोम्मा होम्ह । (क)

**मधुमङ्गलः**—हीही, णिज्जिदाओ गव्विदगोविआओ । (ख) (इति नृत्यति ।)

**राधिका**—अइ मुद्धे ललिदे, भअवन्तस्स उवासणं तुए अज्ज किं विसुमरिदम् । (ग)

**मधुमङ्गलः**—देइ राहिए, केअलं तुम्हे जेव्वं उवासणं करध त्ति मा गव्वाएव, जं अम्हेवि उवासणं करेम्ह । (घ)

**विशाखा**—अज्ज, कीदिसं तम् । (ङ)

**मधुमङ्गलः**—भोदि विसाहे, सुणाहि । गन्धपुप्फपुरस्सरं णिउञ्जवेदिआमज्झे उज्जाअरणभूइट्ठं तदेकग्गचित्तदाए कङ्कणाणं सद्दोवासणम् । (च)

(सर्वाः स्मयन्ते ।)

**मधुमङ्गलः**—(सश्लाघम् । संस्कृतेन ।)

आडम्बरोज्वलगतिर्वरकुञ्जबद्धः
खैरी परिस्फुरितपुष्करचारुहस्तः ।

---

(क) हला, उद्दण्डकालतमालघोरेण वनखण्डेनास्य प्रचण्डता दुःसहा कृता । तदस्माद्धारं रक्षितुं क्षणं सौम्या भवामः ।

(ख) हीही, निर्जिता गर्वितगोपिकाः ।

(ग) अयि मुग्धे ललिते, भगवत उपासनं त्वयाद्य किं विस्मृतम् ।

(घ) देवि राधिके, केवलं यूयमेवमुपासनं कुरुथेति मा गर्वायध्वम्, यद्वयमप्युपासनं कुर्मः ।

(ङ) आर्ये, कीदृशं तत् ।

(च) भवति विशाखे, शृणु । गन्धपुष्पपुरःसरं निकुञ्जवेदिकामध्य उज्जागरणभूयिष्ठं तदेकाग्रचित्ततया कङ्कणानां शब्दोपासनम् ।

---

पंसत्स रङ्गेण च ॥ बाढ विकुद्यतामिति राधिवां श्रावयति ॥ आडम्बरेति । आडम्बरेणाटोपेन, गर्जनेन चोज्वला गतिर्यस्य । परिस्फुरित पुष्करं शुण्डमेव चारुर्हस्तो यस्य,

धन्यासि सुन्दरि यया मृदुलं हसन्त्या
बन्दीकृतस्तरलपल्लवकुञ्जरोऽयम् ॥ २१ ॥

कृष्णः—प्रिये,

रुचिरसहचरीणां वीथिभिः सेव्यमाना
मदमृदुलमरालीरम्यलीलागतिश्रीः ।
शशिमुखि गतनिद्रं कुर्वती मामिदानी
शरदिव भवतीयं लोकलक्ष्मीं तनोति ॥ २२ ॥

तदर्वाचीनेन हारिलावण्यशृङ्गारेण भवतीमलंकुर्वाणः शारदीं श्रियमन्वध्ययामि ।

मधुमङ्गलः—(संस्कृतेन ।)

बलानुज कलापिनामवकलय्य कालज्ञतां
मनः किल बलीयसीं मम बिभर्ति विस्मेरताम् ।
यदद्य शरदागमे तव विलोक्य लीलोत्कतां
किरन्ति रुचिमण्डलीजुपममी शिखण्डावलीम् ॥ २३ ॥

कृष्णः—सखे, साधु लक्षितं तन्मौलिकल्पनाय चन्द्रकानाहरामि । (इति बटुना सह तथा करोति ।)

राधिका—सहि ललिदे, जत्थ दिण्णभारा अहं णिच्चिदम्हि, सा तुमं जइ सोम्मासि, तदो जाव कण्हो दूरे गदो, ताव कङ्केल्लिकुडङ्गं पवेसिस्सम् । (क) (इति तथा स्थिता ।)

---

(क) सखि ललिते, यत्र दत्तभाराहं निश्चिन्तास्मि, सा त्वं यदि सौम्यासि, तदा यावत्कृष्णो दूरे गतः, तावत्कङ्केल्लिकुञ्जे प्रवेक्ष्यामि ।

---

परिस्फुरितेन पुष्करेण लीलाकमलेन चारुः शोभिनो दन्तौ यस्येति च । बन्दीकृतः कारावरः कृतः बद्धः कृतश्च । 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः ॥ रुचिरेति । सहचरीणां झिण्टिपुष्पाणां सखीनां च । मदमृदुलमराल्या गतिरिव रम्या लीलागतिर्यस्याः । तासां रम्याभिर्नानागतिभिः श्रीः शोभा यस्याम् । लोकलक्ष्मीं लोकानन्दसंपत्तिं लोकानां शोभां च ॥ बलानुज इति । कलापिनां मयूराणां कालज्ञतां यस्मिन्काले वक्तुमिति तस्य विज्ञताम् । विस्मेरतां विस्मयम् । किरन्ति क्षिपन्ति ॥ सखे इति । मौलिकल्पनाय मुकु-

कृष्णः—सखे, निर्मितं प्रचलाकशलाकाभिः किरीटं खञ्जरीटनेत्राया सीमन्तसीमनि विन्याससौभाग्यमालम्बताम् । (इति परिक्रम्य ।) ललिते, क्व सा ते प्रियसखी ।

ललिता—अत्तणो घर गदा । (क)

कृष्णः—निष्ठुरे, तिष्ठ । तूर्णमसौ ते धूर्ततागर्वमपहरामि । (इति समन्तात्पश्यन् । सहर्षम् ।) वयस्य, पश्य । सहसेयमवाप्ता गौराङ्गी प्रिया । (इत्युपसर्पति ।)

मधुमङ्गलः—(विहस्य ।) भो वअस्स, चक्कवादेण तिणावट्टेण भमिदस्स दे अज्जवि णूण भमो ण गदो । पेक्ख एसा पीदपराअपुञ्जपिञ्जरिदा थलणलिणी । (ख)

कृष्णः—(निरूप्य ।) सखे, सत्यं ब्रवीषि । (इत्यन्यतो गत्वा ।) भो सखे, पश्य कुङ्कुमाङ्गी निष्टङ्कितमिदानीमेव लब्धा । (इति दिधीर्षुः प्रधावति ।)

मधुमङ्गलः—(सहस्ततालमुच्चैर्विहस्य ।) भो वअस्स, एत्थ तुज्झ अवराहो णत्थि । किंतु पेम्मलहरीए ज्जेव्व । जाए सव्वा वुन्दाटइ राहिआ णिम्मिदा । (ग)

कृष्णः—(सवैलक्ष्यं विलोक्य ।) कथमुत्फुल्लेयं सहचरी । (सर्वतो विलोक्य ।) ललिताङ्कि ललिते, इतो वाम्यपर्वतादवरोहन्ती कान्तारमितस्य ददस्व मे हस्तावलम्बम् ।

ललिता—(स्मित्वा ।) सुन्दर, विसाहं पुच्छेहि । एसा क्खु ण जाणादि । (घ) (इति गर्वं नाटयति ।)

---

(क) आत्मनो गृहं गता ।

(ख) भो वयस्य, चक्रवातेन तृणावर्तेन भ्रमितस्य तेऽद्यापि नूनं भ्रमो न गतः । पश्यैषा पीतपरागपुञ्जपिञ्जरिता स्थलनलिनी ।

(ग) भो वयस्य, अत्र तवापराधो नास्ति, किंतु प्रेमलहर्या एव, यया सर्वा वृन्दाटवी राधिका निर्मिता ।

(घ) सुन्दर, विशाखां पृच्छ । एषा खलु न जानाति ।

---

२ प्रेमान्ध ॥ सर्दासि । ३ [illegible] ॥ पश्यसि । [illegible]

कृष्णः—(सहर्षमपवार्य ।) सखे, पश्य विशाखायाः परोक्षं किंचित्तिरोऽवलम्बती ललिता भ्रूसञ्ज्ञया कदम्बकुञ्जं सूचयति । तदत्र नास्ति मनागपि संदिग्धता । (इति परिक्रम्य सदर्पस्मितम् ।) प्रिये, विलोकितासि । निर्गम्यताम् । (इत्युद्ग्रीविका कृत्वा सहासम् ।) ललिते, साधु साधु । जातं तव धूर्ततालतिकायाः साफल्यमिदम् ।

मधुमङ्गलः—वअस्स, एसा मए ज्जेव्व लद्धा तुह राधा । (क)

कृष्णः—(सकौतुकम् ।) वयस्य, ललितेव कचिदविस्रम्भणीयभणितिर्नासि ।

मधुमङ्गलः—गाअत्तीए सवामि । (ख)

कृष्णः—(सविस्रम्भम् ।) सखे, क सा दर्शय शीघ्रम् ।

मधुमङ्गलः—तुम्ह हत्थगदं जेव्व णं करेमि । ता देहि मे पारितोसिअम् । (ग)

(कृष्ण· सश्लाघ मालतीमालया मण्डयति ।)

मधुमङ्गलः—घेप्पिज्जउ एसा। (घ) (इति 'राधा' इति वर्णद्वयीभाज पत्रलेखामर्पयति ।)

कृष्णः—(स्मित्वा ।) सखे, सत्यमनेनापि भवदर्पितेन तर्पितोऽस्मि । यतः ।

क्रमात्कक्षामक्ष्णोः परिसरभुवं वा श्रवणयो-
र्मनागध्यारूढं प्रणयिजननामाक्षरपदम् ।
कमप्यन्तस्तोपं वितरदवलम्बादनुपदं
निसर्गाद्विश्लेषां हृदयपदवीमुत्सुकयति ॥ २४ ॥

(इति परावृत्य दक्षिणतो विकसन्तमशोकमवलोक्य सविस्मयम् ।)

---

(क) वयस्य, एषा मयैव लब्धा तव राधा ।
(ख) गायत्र्यै शपामि ।
(ग) तव हस्तगतामेवैना करोमि । तद्देहि मे पारितोषिकम् ।
(घ) गृह्यतामेषा ।

---

क्लिष्टी । कान्तारे इतस्य गतस्य । कान्तया रति(मि)तस्य च ॥ प्रमादिति । मम पुन कि वक्तव्यम् । विभिन्नां जनानां प्रणयिजननामाक्षरपद कमपि समाहृदयमान [illegible] ।

शङ्के संकुलितान्तराद्य निबिडक्रीडानुबन्धेच्छया
कुञ्जे वञ्जुलशाखिनः शशिमुखी लीना वरीवर्ति सा ।
नो चेदेष तदङ्घ्रिसंगमविनाभावादकाले कथं
पुष्पामोदनिमन्त्रितालिपटलीस्तोत्रस्य पात्रीभवेत् ॥ ३५ ॥

(इति परिक्रम्य चुड्डीविकया राधां दृष्ट्वा सानन्दम् ।) प्रिये, कथ्यतामिदानीं का वा वार्ता ।

**राधिका**—(सप्रणयेर्ष्यम् ।) तुअत्तो भएण जेव्व पलाइदम्हि । एत्थ वि मं विडम्बेदुं लद्धोसि । (क)

**कृष्णः**—(सात्मश्लाघम् ।) दृष्टा मे पाटवारभटी । यतस्तिरोधानविद्याप्रहारेण निर्जिता यूयम् ।

**ललिता**—(संस्कृतेन ।) हन्त भो वाङ्मात्रजितकाशिन्,

अस्मिन्नेकसरोजसंभवकृतस्तोत्रोऽसि वृन्दावने
राधा भूरिहिरण्यगर्भरचितप्रत्यङ्गकान्तिस्तवा ।
हस्तोदस्तमहीधरस्त्वमसकृन्नेत्रान्तभङ्गिच्छटा-
कृष्टोच्चैर्धरणीधरा मम सखी तद्वीरमाहं कथाः ॥ ३६ ॥

**कृष्णः**—ललिते, निलीने मयि विलोकिते नातथ्यं तव विकत्थनं भवतीनां विदांकरवाणि ।

**सर्वाः**—एव्वं होदु । (ख)

(क) त्वत्तो भयेनैव पलायितास्मि । अत्रापि मां विडम्बयितुं लब्धोऽसि ।

(ख) एवं भवतु ।

अन्तस्तोष ददत् सत् ॥ शङ्के इति । एष वञ्जुलशाखी । 'वञ्जुलो वञ्जुलोऽशोके' इत्यमरः । पुष्पैः प्रथितेनामोदेन माध्वीकपानाय मधुव्रतमलत्वेनेति निमन्त्रितानामलिपटलीनां भ्रमरसमूहानां स्वादशः परमोदारो भुवि यो वर्तते इति स्तोत्रस्य गुम्फितस्य पात्रमन्यथा न भवेत् । पात्रीभवेदिति अभूततद्भावे च्विः ॥ हन्तेति । जितकाशिन् जितमित्यात्मश्लाघिन् । अस्मिन्निति । अस्मिन् वृन्दावने एकेन सरोजसंभवेन ब्रह्मणा कृतस्तोत्रोऽसीति तथाहङ्कारः । राधा भूरिहिरण्यगर्भैर्बहुभिर्ब्रह्मभिर्भूरिहिरण्यानां बहुलसुवर्णानां गर्भैरिव सति चापचिस्वायमानमध्यगतगात्रैरिव रचितः प्रत्यङ्गकान्तीनां स्तवो यस्याः । हस्तोदस्तमहीधरस्त्वमसि । तथाहङ्कारः । इय तु नेत्रान्तभङ्गिच्छटैवपाकृष्ट

कृष्णः—इयमुत्तरतश्चञ्चरीकसंचयरोचिरुल्लासिश्यामलपलाशगुलुच्छा दूरतस्तापिच्छविच्छोली । तदेषा सवर्णतया सखीभावमापन्ना मामत्र संगोपयिष्यति । (इति सवयस्यो निष्क्रान्तः ।)

ललिता—हला राहे, कण्हस्स अदंसणेण मा उत्तम्म । णं दिट्ठं जेव्व जाणेहि । ता विजुत्ता आसव्वदो उपसप्पम्ह । (क)

राधिका—जधा भणदि पिअसही । (ख)

(इति तिस्रस्तथा कुर्वन्ति ।)

राधिका—(उत्तरां वनलेखामासाद्य सविमर्शम् ।) णूणं कण्हो एत्थ पत्तो हुविस्सदि जं मं पेक्खन्तो दक्खिणं पइट्ठो । (ग)

स हरिति भवतीभिः स्वान्तहारी हरिण्यो
हरिरिह किमपाङ्गातिथ्यसङ्गी व्यधायि ।
यदनुरणितवंशीकाकलीभिर्मुखेभ्यः
सुखतृणकवला वः सामिलीढाः स्खलन्ति ॥ २७ ॥

(पुरोऽभ्युपेत्य समन्तात्पश्यन्ती । सस्कृतेन ।)

यदगलितमरन्दं वर्तते शाखिवृन्दं
मिलति च यदलब्धप्रेमघूर्णा खगाली ।
तदिह न हि शिखण्डोत्तंसिनी सा प्रविष्टा
निखिलभुवनचेतोहारिणी कापि विद्या ॥ २८ ॥

(इति सव्यतः परिक्रम्य । संस्कृतेन ।)

विघूर्णन्तः पौष्पं न मधु लिहतेऽमी मधुलिहः
शुकोऽयं नादत्ते कलितजडिमा दाडिमफलम् ।

---

(क) हला राधे, कृष्णस्यादर्शनेन मोत्ताम्य । एनं दृष्टमेव जानीहि । तद्वियुक्ता आ सर्वत उपसर्पामः ।

(ख) यथा भणति प्रियसखी ।

(ग) नूनं कृष्णोऽत्र प्राप्तो भविष्यति, यन्मां पश्यन्दक्षिणं प्रविष्टः ।

---

उपेर्धरणीधरः कृष्णो यया । असद्दनेरवारम् । भवारत्येरवारमिति भावः ॥ इयमिति । चञ्चरीको भ्रमरः । तापिच्छविच्छोली तमालसमूहः ॥ स हरितीति । हे हरिण्यः, स हरिः इह अस्यां हरिति दिशि क अपाङ्गातिथ्यसङ्गी व्यधायि । काकलीभिर्हेतुभिः सुखतृणकवलास्तृणग्रासाः सामिलीढा अर्धगिलिता एव स्खलन्ति ॥ विघूर्णन्त इति ।

विवर्णा पर्णाग्रं चरति हरिणीयं न हरितं
पथानेन स्वामी तदिभवरगामी हरिरगात् ॥ २९ ॥

(पुरो गत्वा ।) एसा वामदो काली तमालअली दीसइ । (क) (इति साचिकधरं निभाल्य । संस्कृतेन ।)

नैसर्गिकाण्यपि निरर्गलचापलानि
हित्वाद्य संकुलतनुः पुलकाङ्कुरेण ।
दृष्टिं चिरेण परिरब्धतमालशाखा
शाखामृगीततिरियं किमधस्तनोति ॥ ३० ॥

ता एसा मञ्जुला ताविञ्छणिउञ्जसालिआ पेक्खिदव्वा । (ख)

(प्रविश्य ।)

कृष्णः—(स्वगतम् ।) सत्यमस्याश्चित्तचत्वरसंगत्वरी प्रेमावलिरिव मदुद्देशदूती । यदलम्बितं विज्ञातभूयिष्ठोऽसि संवृत्तः । ततः स्थाणुरिव निश्चलस्तिष्ठामि । (इति तथा स्थितः ।)

राधिका—(मूर्धानमानमय्य कृष्णं पश्यन्ती । सव्याजम् ।) एत्थ कण्हो णत्थि । (ग)

कृष्णः—(स्वगतम् ।) दिष्ट्या न दृष्टोऽसि ।

राधिका—(सस्मितम् ।) एसो णीलो मणिकीलो ज्जेव रेहदि । (घ)

कृष्णः—नूनं घनान्धकारतो नाहं प्रत्यभिज्ञातः ।

राधिका—अम्हहे, उज्जलदा इन्दंणीलकीलस्स । (ङ)

---

(क) एषा वामतः काली तमालावली दृश्यते ।
(ख) तदेषा मञ्जुला तापिच्छनिकुञ्जशालिका प्रेक्षितव्या ।
(ग) अत्र कृष्णो नास्ति ।
(घ) एष नीलो मणिकील एव तिष्ठति ।
(ङ) अम्महे, उज्ज्वलतेन्द्रनीलकीलस्य ।

---

पीतं मधु न विद्यते नास्वादयन्ति । पर्णाग्राण्यपि पर्णानि मनोज्ञानि । इभवरगामी श्रीकृष्णः । पथेति । काली कृष्णवर्णा । नैसर्गिकाणीति । शाखामृगीततिः परिरम्भणमालशाखा यस्याः अधो दृष्टिं तनोति ॥ सत्यमिति । विप्रलम्भवरगमनशालिनी ।

**कृष्णः**—(सहर्षमपवार्य ।)

> रे ध्वान्तमण्डल सखे शरणागतोऽस्मि
> विस्तारयस्व तरसा निजवैभवानि ।
> अभ्यासमभ्युपगतापि मुहुर्यथा सा
> नावैति मां नवकुरङ्गतरङ्गिनेत्रा ॥ ३१ ॥

**राधिका**—(स्मित्वा ।) अच्चरिअं अच्चरिअम् । इमस्स णीलोवलस्स अन्तराले पडिबिम्बिदा चन्दाअली लक्खीअदि । (क)

**कृष्णः**—(स्मितं कृत्वा स्वगतम् ।) कथं संविदाना खलु नर्मातनोति । (इत्युत्थाय । प्रकाशम् ।) प्रिये, सत्यमात्थ । यदयं त्वदास्यचन्द्रो मे हृद्वृत्तितरङ्गेषु बिम्बितश्चन्द्रावली बभूव ।

**राधिका**—अम्हहे । कथं तुमं जेव्व । तदो णेदं अच्चरिअम् । (ख)

**कृष्णः**—विलासिनि, किमनेन विश्लेषसंपाद्येन केलिनर्मणा । तदेहि । दानगन्धिना कुसुमवृन्देन पूर्णमूर्धनि सप्तपर्णकुञ्जे क्षणं विश्रामसौख्यमनुभवाम ।

(इति तथा स्थितौ ।)

**ललिता**—विसाहे, पेक्ख । कण्हेण संगदा पिअसही, जं तस्स पदेहिं संमिस्सिदाइं एदाए पदाइं दीसन्ति । (ग)

---

(क) आश्चर्यमाश्चर्यम् । एतस्य नीलोपलस्यान्तराले प्रतिबिम्बिता चन्द्रावली लक्ष्यते ।

(ख) अहो । कथं त्वमेव । ततो नेदमाश्चर्यम् ।

(ग) विशाखे, पश्य । कृष्णेन सगता प्रियसखी, यत्तस्य पदैः संमिश्रितान्येतस्याः पदानि दृश्यन्ते ।

---

विज्ञात भूयिष्ठ बहुतरचातुर्यं यस्य सः ॥ रे ध्वान्तेति । अभ्यास निकटम् । नावैति न जानाति ॥ **कथमिति** । संविदाना जानन्ती । 'समो गम्यृच्छि–'इत्यादिनात्मनेपदम् । अतो नेदमाश्चर्यमिति चन्द्रावली त्वयि प्रतिबिम्बिता निश्चयेनेत्यर्थः ॥ **विलासिनीति** । विश्लेषः संपाद्य उत्पाद्यो यस्य । तेन कुलालकर्तृको घट इतिवत्संपाद्यपदस्य विशेष्य-

विशाखा—(पदाङ्कानुसृत्य संस्कृतेन ।)

प्रियसखि परिरम्भानाभिमुख्यानुबन्धा-
दसदृशविनिवेशान्नर्मलौल्योर्जितानि ।
इयमविषममन्दन्यासतो जल्पगोष्ठीं
पदततिरिह राधाकृष्णयोरातनोति ॥ ३२ ॥

कृष्णः—प्रिये, नातिदूरे कोमलोऽयं काञ्चीध्वनिरुदञ्चति । ततस्तूर्ष्णीं शृणुवः ।

विशाखा—हला, विरिथिण्णवल्लिमण्डलकुण्डलिदे वि वणखण्डे पिअसहीए कधं कण्हो तुरिदं लद्धो । (क)

ललिता—

गरुअं रमई जहिं जो ण तस्स सो होइ दुल्लहो भुवणे ।
मउलंलम्मिरसाले कलकण्ठी तक्खणं मिलई ॥ ३३ ॥ (ख)

कृष्णः—प्रिये, प्रत्यासन्ने तव सख्यौ । तदुभे परिहसिष्यन्नन्तरितो भवामि । (इति तथा स्थितः ।)

ललिता—(परिक्रम्य पुरो राधामालोक्य च सहर्षम् ।) हला, कुदो सो णाअरो । (ग)

राधिका—(सस्मितम् ।) का क्खु तं जाणादि । (घ)

ललिता—(सनर्मस्मितं संस्कृतमाश्रित्य ।)

कचा मुक्ता मुक्तावलिरपि ययौ निर्गुणदशां
विशुद्धं ते दन्तच्छदयुगमभूद्दान्तहृदये ।

---

(क) सखि, विस्तीर्णवल्लिमण्डलकुण्डलितेऽपि वनखण्डे प्रियसख्या कथं कृष्णस्त्वरितं लब्धः ।

(ख) गुरु रमते यत्र य स(न) तस्य न(स) [भवति]दुर्लभो भुवने ।
मुकुलायमानरसाले कलकण्ठी तत्क्षणं मिलति ॥

(ग) सखि, कुतः स नागरः ।

(घ) का खलु तं जानाति ।

---

त्वम् ॥·········तत्राय क्रमो विहारस्य । प्रथमम् गण्डस्थलनिवेशः, ततो मुक्तामुक्तिनिवेशः, ततः प्रमाणगुणनिवेशः । दर्शनक्रमस्तु विपर्ययेण ॥ कचा इति । मुक्ताः त्यक्ताः, प-

अवन्धासीत्काञ्ची तदिव सखि युक्तासि हरिणा
सतीनां वः कृत्यं किमुचितमिदं गोकुलभुवाम् ॥ ३४ ॥

कृष्णः—(पुरोऽनुसृत्य ।) ललिते, नाहमपराध्यामि सख्यै। वने संगोपितोऽसि ।

ललिता—किंति पिअसहीए संगोवणिज्जो तुमम् । (क)

कृष्णः—सुन्दरि, निजकन्दर्पकलाप्रागल्भ्यस्यापलापाय । (इत्यङ्गुल्या दर्शयन् ।) पश्य पश्य ।

कठोराग्रैर्भूयो व्रणमजनयद्वक्षसि नखै-
र्वेलादाक्रामन्ती व्यकिरदपि मां पिच्छरचनाम् ।
विकृष्य च्छिन्नाङ्गीमकृतवनमालां च रुचिरा-
मिदानीं जानीते न किमपि पुरस्ते प्रियसखी ॥ ३५ ॥

राधा—(सापत्रपम् ।) हुं, अप्पणा कदुअ परं दूसेदुं पण्डिदोसि । (ख)

(नेपथ्ये ।)

जटिला—फुडमञ्जरिहिं—(ग) (इत्यर्धोक्ते ।)

राधिका—(सत्रासम् ।) अच्चाहिदं अच्चाहिदम् । भअंकरी वुड्ढिआ । ता तुरिअं पलाएम्ह । (घ) (इति सखीभ्यां सह निष्क्रान्ता ।)

---

(क) किमिति प्रियसख्या संगोपनीयस्त्वम् ।

(ख) हुं, आत्मना कृत्वा परं दूषयितुं पण्डितोऽसि ।

(ग) स्फुटमञ्जरीभिः ।

(घ) अत्याहितमत्याहितम् । भयंकरी वृद्धा । तत्त्वरितं पलायामः ।

---

पर्णाः स्खलिताश्च । निर्गुणदशा छिन्नसूत्रताम् । सत्त्वादिगुणत्रयातीतता च । दन्तच्छदयुगमौष्ठाधरौ विशुद्ध ताम्बूलरागरहितम् । पक्षे शुक्लमित्यर्थः । हे दान्तहृदये दान्त गाढालिङ्गनेन प्राप्तसंमर्दम्, पक्षे दमयुक्तम् । जीवन्मुक्तमित्यर्थः । तथाभूत हृदयं यस्याः । अवन्धा संसारबन्धरहिता, बन्धनग्रन्थिस्खलिता च । तत्तस्मादनुमीयते हरिणा त्व युक्तासि । हरेर्योगेनैव कचो(कञ्ची)स्खालनहारत्रोटनादीनि निर्वाणो मोक्षश्च भवतीत्यर्थः । इद किं गोकुलभुवां गोकुलवासिनीनां पतिव्रतानामुचितम् । नैवोचितमित्यर्थः । वस्तुतस्तु इदं हि मुचितम् । इतोऽप्यधिक कृष्णस्य मुकुटहारत्रोटनवक्षःसंमर्दनादिक रतिविपरीतमेनोचितमित्यर्थः । पक्षे गोकुल-

(पुनर्नेपथ्ये ।)

विह्नदिमन्तो पराअपुञ्जेण हरभत्ता विअ सवए फ्फुरन्ति सत्तच्छदप-अराः । (क)

**कृष्णः**—(सवैलक्ष्यम् ।) हन्त, सप्तपर्णं वर्णयता जटिलेति कटुद्वारेण वटुना कदर्थितोऽसि । तदग्रे सुहृन्मण्डलमेव प्रयामि ।

(इति निष्क्रान्ताः सर्वे ।)

इति शरद्विहारो नाम षष्ठोऽङ्कः ।

---

सप्तमोऽङ्कः ।

(ततः प्रविशति वृन्दा ।)

**वृन्दा**—(समन्तादवलोक्य ।)

कदम्बाली जृम्भाभरपरिमलोद्गारिपवना
स्फुटद्यूथी यूथीकृतमधुपगानप्रणयिनी ।
नटत्केकिस्तोमा मृदुलयवसस्या मलिनभू-
स्तपान्तेऽद्य स्वान्तं मम रमयति द्वादशवनी ॥ १ ॥

(नेपथ्ये दृष्टिं निक्षिप्य ।) कथमसौ पौर्णमाणी निजपर्णकुटीरोपान्तवाटिकाया-मभिमन्युना संकथयन्ती वर्तते । तदहं क्षणमत्रैव तिष्ठेयम् ।

(प्रविश्य तथाभूता पौर्णमासी ।)

**पौर्णमासी**—वत्साभिमन्यो, किमर्थं प्रातरेवाहमुपसादितास्मि ।

**अभिमन्युः**—तुज्झ आणं गहिदुम् । (ख)

**पौर्णमासी**—कस्मिन्नर्थे ।

---

(क) विभूतिमन्तः परागपुञ्जेन हरभक्ता इव शरदि स्फुरन्ति सप्तच्छदप्रकराः ।

*(ख) तवाज्ञां ग्रहीतुम् ।*

---

भुवां गोकुलभूमीनां सर्वतीर्थेभ्योऽपि श्रेष्ठतामिदं दृश्यं गोपीकदम्बतलविभूषितम् । मोचितमेव । प्रेमभक्तिविशेषवात् ॥

पञ्चऋतूनां मध्ये प्रथमां वसन्तशरद्वर्णनामेवाधिकचमत्कारकत्वादपि पूर्वपूर्वोत्कृ-ष्टत्वात् प्रथमं वसन्तस्य ततः शरदः शेषेण ग्रीष्मादेः हेमन्तः । इदानीं श्रावणपूर्णिमारम्भे-त्यामाभिमुख्येन वर्णयति—कदम्बालीति । जृम्भा प्रादुर्भावः । तपान्ते निदाघान्ते ॥

**अभिमन्युः**—वारिसहाणवीए महुरापत्थाणे । (क)

**पौर्णमासी**—(सव्यथम् ।) कस्तत्र हेतुः ।

**अभिमन्युः**—दोण्हं राहामाहवाणं चापलं जेव । (ख)

**पौर्णमासी**—वीर, केन तवेदं वर्णितम् ।

**अभिमन्युः**—पिअवअस्सेण गोवड्ढणेण । (ग)

**पौर्णमासी**—वत्साभिमन्यो, चतुरंमन्योऽपि त्वमनार्यबुद्धिरसि । येन भोजेन्द्रवल्लभस्य कौटिल्यचक्रेण विभ्रम्यसे ।

**अभिमन्युः**—अदिपसिद्धा एसा पउत्ती केण वा ण कहिज्जइ । (घ)

**पौर्णमासी**—पुत्र, नूनं कर्णेजपानामुपाजपेन लुप्तविवेकोऽसि । तदाकर्णय ।

**अभिमन्युः**—आणवेहि । (ङ)

**पौर्णमासी**—वत्स, येन लावण्यगन्धलवलुब्धेन कंसशार्दूलेन स्वयमेव राधामृगी मृग्यते । तस्य दारुणस्य कंसशार्दूलस्य हस्तोपरि न्याय्यः कथमस्याः प्रक्षेपः ।

**अभिमन्युः**—भअवदि, तत्थ का चिन्ता । सो क्खु कुसली होदु सुहित्तमो गोवड्ढणो, जेण विज्जामाहुरीए महुरिन्दो वसीकिओ । (च)

**पौर्णमासी**—(सखेदम् । क्षणमनुध्याय ।) हंहो धन्यानां मूर्धन्य गोविन्द,

---

(क) वार्षभानव्या मथुराप्रस्थाने ।

(ख) द्वयो राधामाधवयोश्चापलमेव ।

(ग) प्रियवयस्येन गोवर्धनेन ।

(घ) अतिप्रसिद्धैषा प्रवृत्तिः केन वा न कथ्यते ।

(ङ) आज्ञापय ।

(च) भगवति, तत्र का चिन्ता । स खलु कुशली भवतु सुहृत्तमो गोवर्धनः, येन विद्यामाधुरीभिर्मथुरेन्द्रो वशीकृतः ।

---

वत्सेति । भोजेन्द्रः कंसः ॥ पुत्रेति । कर्णेजपानां खलानामुपजापो भेदः । 'भेदोपजापौ'

मातुर्मातुलेयोऽसि । कथमल्पायुषां गोकुलद्वेषिणां मण्डलपातितामालम्बसे । तदद्य कयापि मर्यादया त्वां पर्यापयितुमिच्छामि ।

**अभिमन्युः**—आणवेदु तत्थहोदी । (क)

**पौर्णमासी**—वत्स, सा काचिन्मत्सरकल्पितापि किंवदन्ती यदि त्वया नातथ्यतया प्रतीयते, ततः स्वयमेव चक्षुषोरपरोक्षीकृत्य यथेष्टं चेष्टनीयम् ।

**अभिमन्युः**—(सप्रश्रयम् ।) भअवदि, सिरेगहिदं दे णिदेसकुसुमम् । (ख)

**पौर्णमासी**—(सानन्दम् ।) सोमानन, गोमानत्र भूयाः ।

**अभिमन्युः**—भअवदि, अम्बा मं पुणो पुणो भणदि—पुत्त, चन्दाअलिचण्डिअच्चणेण गोअड्ढणो जहत्थणामा संवुत्तो । ता वड्ढिया वि तत्थ दीक्खाविज्जउत्ति । (ग)

**पौर्णमासी**—मङ्गलमते, सर्वमङ्गलाराधने दीक्षितामविलम्बमेव वार्षभानवीं विद्धि ।

**अभिमन्युः**—भअवदि, अणुकम्पिदो म्हि । (घ) (इति निष्क्रान्तः ।)

**वृन्दा**—(परिक्रम्य ।) वन्दे भगवतीम् ।

**पौर्णमासी**—(विलोक्य शुभाशीर्भिरभिनन्द्य च ।) वत्से, कामं कृतार्थासि । तदावेदय राधामाधवयोर्निकुञ्जकेलिमाधुरीम् ।

**वृन्दा**—

सर्वस्वं प्रथमरसस्य यः प्रथीयान्कंसारेरुदयति राधया विलासः ।
वक्तुं को विरमति तं जनः समन्तादानन्दस्तिरयति चेद्गिरां न वृत्तिम् ॥ २ ॥

---

(क) आज्ञापयतु तत्रभवती ।

(ख) भगवति, शिरोगृहीतं ते निदेशकुसुमम् ।

(ग) भगवति, अम्बा मां पुनः पुनर्भणति—पुत्र, चन्द्रावलिचण्डिकार्चनेन गोवर्धनो यथार्थनामा संवृत्तः । तस्माद्वृद्धापि तत्र दीक्षायितामिति ।

(घ) भगवति, अनुकम्पितोऽस्मि ।

---

इत्यर्थः ॥ आज्ञापयदिति । यथार्थनामा । गवां वर्धनं वृद्धिर्यतः स गोवर्धनः ॥ मङ्गलमते इति । सर्वमङ्गलायाः सर्वमङ्गलस्य वृन्दावनस्य आराधने ॥ सर्वस्वमिति । यः प्रथीयान्

**पौर्णमासी**—(सानन्दम् ।) पुत्रि वृन्दे,

हरिरेष न चेदवातरिष्यन्मथुरायां मधुराक्षि राधिका च ।
अभविष्यदियं वृथा विसृष्टिर्मकराङ्कस्तु विशेषतस्तदात्र ॥ ३ ॥

तदद्य गोष्ठमध्ये तवोपसत्तिर्मां विस्मारयति ।

**वृन्दा**—भगवति, त्वरते कोऽपि गरीयानर्थः । तदत्र ललितामपेक्षमाणास्मि ।

**पौर्णमासी**—कीदृशोऽयम् ।

**वृन्दा**—पूर्वेद्युरादिष्टास्मि गोविन्देन । यथा—

आहर गौरीतीर्थे मधुरश्रियं तत्र रन्तुमिच्छामि ।
पद्मावलम्बिकरया प्रियया पद्मावतंसिकया ॥ ४ ॥

**पौर्णमासी**—युक्तमादिष्टं यदद्य सौभाग्यपूर्णिमा । तथा हि—

प्रसूनैरद्भुतैः कान्ता कान्तेन श्रावणीदिने ।
प्रसाधिता प्रसिद्धेन सौभाग्येन विवर्धते ॥ ५ ॥

ततः ।

**वृन्दा**—ततश्च तद्वृत्ते शारिकामुखतः सखीसंसदि संचारिते यथार्थतर्कितराधार्थसिद्धिरपि पद्मा ललितां कटाक्षयन्ती हठादवादीत्—

उत्फुल्लमूर्तेः समुल्लसन्त्याश्चन्द्रावलेश्चन्द्रकमण्डलेन ।
म्लायन्ति सौभाग्यभरप्रभाभिर्गवान्धगोपीवदनाम्बुजानि ॥ ६ ॥

**पौर्णमासी**—(विहस्य ।) ततस्ततः ।

**वृन्दा**—ततश्च स्मेरया दृष्टिमुद्रयैव तामधीरामवधीरयन्ती ललिता

---

विलासः प्रथमरसस्य शृङ्गाररसस्य सर्वस्वं तं चक्रु तिरयति निवर्तयति ॥ **हरिरिति** । इय विसृष्टिः । विश्वमेव समस्तमित्यर्थः । वृथा व्यर्था । विशेषतस्तु कन्दर्पः । तेनाधुना विश्व कामश्च सफलीभूत जातमिति भाव. ॥ **आहरेति** । मधुरश्रियं वसन्तशोभाम् । तेन कल्पितस्य वसन्तस्य वर्तमानायाम वर्षायाश्च पुष्पादिपरिष्कारसमृद्धिभिर्महान् विहारो भविष्यतीति भावः ॥ **प्रसूनैरिति** । प्रसाधिता अलंकृता सती ॥ **यथार्थत इति** । 'आहर गौरीतीर्थे' इत्यस्मिन् पद्ये 'पद्मावलम्बिकरया प्रियया' इत्यस्य पद्मा सखीमवलम्बते करो यस्यास्तया प्रियया चन्द्रावल्या कल्पिता अर्थस्य करिष्यमाणत्वात् ॥ **उत्फुल्लेति** । चन्द्रावलेश्चन्द्रावल्याश्चन्द्रकमण्डलेन वृन्देन समुल्लसन्त्याः ॥ **तत इति** । अवधीरयन्ती अवजानन्ती ।

मया सह राधामुपसाद्य कल्ये प्रस्थानाय तामतिसंभ्रमं लम्भयामास। पश्य वृत्तेऽद्य यामे सेयं नाजगाम ।

(प्रविश्य ।)

**ललिता**—सहि वुन्दे, जुत्तं गव्वाइदं पउमाए। दाणिं जाणिदम्.।, तत्थ पत्थाणे कुदो अम्हाणं जोग्गदा । (क)

**पौर्णमासी**—पुत्रि, कथमेवम् ।

**ललिता**—भअवदि, तुम्ह पुरदो अम्हाणं तिण्णदोहग्गसल्लेण किं उग्घडिदेण । (ख)

**पौर्णमासी**—वत्से, शुश्रूषुरस्मि । वर्ण्यताम् ।

**ललिता**—(साम्रम् ।) अज्जे, गोरपट्टसुत्तेण गण्ठिदा एक्का दिव्वमाला पिअसहीए कण्हस्स दिण्णा । सा अम्हेहिं पउमिआधम्मिल्ले तक्कालं जेव्व दिट्ठा । (ग)

**पौर्णमासी**—स्थाने ग्लानिरियम् । बाढमसांप्रतमेतद्गोविन्दस्य ।

**वृन्दा**—शान्तममङ्गलम् ।

**पौर्णमासी**—वृन्दे, कथ्यतां किं नामेदम् ।

**वृन्दा**—वर्णितं मे मनुष्यवाक्यया तया कक्खटिकया—क्रदम्बशा-

(क) सखि वृन्दे, युक्तं गर्वायितं पद्मया । इदानीं ज्ञातम् । तत्र प्रस्थाने कुतोऽस्माकं योग्यता ।

(ख) भगवति, तव पुरतोऽस्माकं तीक्ष्णदौर्भाग्यशल्येन किमुद्घाटितेन ।

(ग) आर्ये, गौरपट्टसूत्रेण ग्रथितैका दिव्यमाला प्रियसख्या कृष्णाय दत्ता । साऽस्माभिः पद्माधम्मिल्ले तत्कालमेव दृष्टा ।

कल्ये प्रातः । अतिसंभ्रममतित्वराम् ॥ अज्जे इति । गौरपट्टसूत्रेण ग्रथिता कृष्णाय दत्तेति द्वादश्यां पवित्रधारणोत्सवे इति ज्ञेयम् । सा पद्माधम्मिल्ले तत्कालमेव तस्मिन्दिने दृष्टा । इदमत्र तत्त्वम्—द्वादश्यामेव पद्माधम्मिल्ले माला दृष्टा । किंतु राधिकादत्तकृष्णमालेयमिति विशेषज्ञानं नासीत् । पौर्णमास्याः प्रातस्तु तासां गर्वहेतुज्ञानार्थं यथादृष्टतन्मालावैशिष्ट्यमेतदस्य पृष्टया राधया प्रोक्तम्—'मयैव दत्ता सा कृष्णाय' इति श्रुत्वा ललिता खेदयुक्ताभूदिति । अत एव 'दाणिं जाणिदम्' इत्युक्तम् । तेन पूर्वं पुनरत्र गमनाप्ययोग्याय आसीदिति ॥ स्थान इति । स्थाने युक्ता ग्लानिरित्यर्थः । 'युक्ते स्मादावृते स्थाने' इत्यमरः । बाढमसांप्रतमनिश्चये-

खाया मालामालम्ब्य कालिन्दीमवगाढे वनमालिनि संप्रवृत्ते च केतकीपरागचक्रचण्डे मरुन्मण्डले पद्मा किलेमां जहार । मारुतस्तु मुधा कलङ्कं जगामेति ।

ललिता—धुत्ते, मुद्ध णं वअणम् । (क)

वृन्दा—पुष्पमञ्जरीभ्यः शपे ।

ललिता—(विहस्य ।) हला, सच्चं सच्चम् । अम्ह पुरदो अप्पणो सोहग्गं विक्खेवेन्ती पउमिआ मालं विवरेदि । कण्हमित्ताणं अग्गदो उण णं संवरेदि । (ख)

पौर्णमासी—पुत्रि ललिते, स्फुटमत्र पूर्णिमायां युष्माकमनुद्यमाय पद्मया तां छद्मचातुरीं प्रसार्य गौरीतीर्थं चन्द्रावली लम्भिता ।

वृन्दा—युक्तमाह भगवती । तदद्य गौरीतीर्थे राधिकोपनीतिः कल्याणी मे न प्रतिभाति ।

(प्रविश्य ।)

विशाखा—गोउलेश्वरीमुहादो अज्ज सोहग्गपुण्णिमं सुणिअ करालाए चन्दाअली अप्पभत्तुणो मल्लस्स पासे पत्थावीअदि । (ग)

ललिता—(सहर्षम् ।) विसाहे, इट्ठदेओ सरोअणाहो दे पसीददु । ता तुवरीअदु । (घ)

पौर्णमासी—पुत्रि वृन्दे, कामप्यद्यतनीमभिमन्योर्दारुणां दुर्मन्त्रिमुद्रां

(क) धूर्ते, मुधैनं वचनम् ।

(ख) हला, सत्यं सत्यम् । अस्मत्पुरत आत्मनः सौभाग्यं विख्यापयन्ती पद्मा माल्यं विवृणोति । कृष्णमित्राणामग्रतः पुनरेना संवृणोति ।

(ग) गोकुलेश्वरीमुखतोऽद्य सौभाग्यपूर्णिमां श्रुत्वा करालया चन्द्रावली आत्मभर्तुर्मल्लस्य पार्श्वे प्रस्थाप्यते ।

(घ) विशाखे, इष्टदेवः सरोजनाथस्ते प्रसीदतु । तत्त्वर्यताम् ।

नायोग्यमेतत् । अनुचितं कृतं कृष्णेनेत्यर्थः ॥ शान्तममङ्गलम् । नास्त्यमङ्गलमित्यर्थः ॥ अम्ह इति । कृष्णमित्राणामग्रतः संवृणोतीति तदानीं कृष्णमाहसितत्वेन तेमाद्दतेनैव थालिमा मालेति ज्ञातत्वात् ॥ गोउलेश्वरीति । आत्मभर्तुर्मल्लस्य गोवर्धनमल्लस्य ॥ पुत्रीति ।

मया सह राधामुपसाद्य कल्ये प्रस्थानाय तामतिसंभ्रमं लम्भयामास। पश्य वृत्तेऽद्य यामे सेयं नाजगाम।

(प्रविश्य।)

**ललिता**—सहि वुन्दे, जुत्तं गव्वाइदं पउमाए। दाणिं जाणिदम्।,तत्थ पत्थाणे कुदो अम्हाणं जोग्गदा। (क)

**पौर्णमासी**—पुत्रि, कथमेवम्।

**ललिता**—भअवदि, तुम्ह पुरदो अम्हाणं तिण्णदोहग्गसल्लेण किं उग्घडिदेण। (ख)

**पौर्णमासी**—वत्से, शुश्रूपुरसि। वर्ण्यताम्।

**ललिता**—(सास्रम्।) अज्जे, गोरपट्टसुत्तेण गण्ठिदा एक्का दिव्वमाला पिअसहीए कण्हस्स दिण्णा। सा अम्हेहिं पउमिआधम्मिल्ले तक्कालं जेव्व दिट्ठा। (ग)

**पौर्णमासी**—स्थाने ग्लानिरियम्। बाढमसांप्रतमेतद्गोविन्दस्य।

**वृन्दा**—शान्तममङ्गलम्।

**पौर्णमासी**—वृन्दे, कथ्यतां किं नामेदम्।

**वृन्दा**—वर्णितं मे मनुष्यवाक्यया तया कक्खटिकया—कदम्बशा-

---

(क) सखि वृन्दे, युक्तं गर्वायितं पद्मया। इदानीं ज्ञातम्। तत्र प्रस्थाने कुतोऽस्माकं योग्यता।

(ख) भगवति, तव पुरतोऽस्माकं तीक्ष्णदौर्भाग्यशल्येन किमुद्घाटितेन।

(ग) आर्ये, गौरपट्टसूत्रेण ग्रथितैका दिव्यमाला प्रियसख्या कृष्णाय दत्ता। सा-स्माभिः पद्माधम्मिल्ले तत्कालमेव दृष्टा।

---

कल्ये प्रातः। अतिसंभ्रममतित्वराम्॥ अज्जे इति। गौरपट्टसूत्रेण ग्रथिता कृष्णाय द-त्तेति द्वादश्यां पवित्रारोपणोत्सवे इति शेषः। सा पद्माधम्मिल्ले तत्कालमेव तस्मिन्दिने दृष्टा। इदमत्र तात्पर्यम्—द्वादश्यामेव पद्माधम्मिल्ले माला दृष्टा। किंतु राधिकादत्तकृष्णमाल्यमिति विशेषस्तु नाज्ञात्। पौर्णमास्याः प्रागेव तासां गर्वहेतुज्ञानार्थं यथादृष्टतत्कालशिरोधृतमाल्य पृष्टया राधया प्रोक्तम्—'मयैव दत्ता सा कृष्णाय' इति श्रुत्वा ललिता गर्वयुक्ताभूदिति। अत एव 'दाणिं जाणिदम्' इत्युक्तम्। तेन पूर्वं तु तत्र सम्यगाप्ययनाय भावोऽस्ति॥ स्थाने इति। स्थाने युक्ता ग्लानिरित्यर्थः। 'युक्ते स्मादावृते स्थाने' इत्यमरः। बाढमसांप्रतमतिशये-

सायां मालामालम्ब्य कालिन्दीमवगाढे वनमालिनि संप्रवृत्ते च केतकीपरागचक्रचण्डे मरुन्मण्डले पद्मा किलेमां जहार । मारुतस्तु मुधा कलङ्कं जगामेति ।

ललिता—धुत्ते, मुञ्च णं वञ्चणम् । (क)

वृन्दा—पुष्पमञ्जरीभ्यः शपे ।

ललिता—(विस्मय ।) हला, सच्चं सच्चम् । अम्ह पुरदो अप्पणो सोहग्गं विक्खेवेन्ती पउमिआ मालं विवरेदि । कण्हमित्ताणं अग्गदो उण णं संवरेदि । (ख)

पौर्णमासी—पुत्रि ललिते, स्फुटमत्र पूर्णिमायां युष्माकमनुद्यमाय पद्मया तां छद्मचातुरीं प्रसार्य गौरीतीर्थे चन्द्रावली लम्भिता ।

वृन्दा—युक्तमाह भगवती । तदद्य गौरीतीर्थे राधिकोपनीतिः कल्याणी मे न प्रतिभाति ।

(प्रविश्य ।)

विशाखा—गोउलेश्वरीमुहादो अज्ज सोहग्गपुण्णिमं सुणिअ करालाए चन्दाअली अप्पभत्तुणो मल्लस्स पासे पत्थावीअदि । (ग)

ललिता—(सहर्षम् ।) विसाहे, इट्ठदेओ सरोअणाहो दे पसीददु । ता तुवरीअदु । (घ)

पौर्णमासी—पुत्रि वृन्दे, कामप्यद्यतनीमभिमन्योर्दारुणां दुर्मन्त्रिमुद्रां

---

(क) धूर्ते, मुञ्चैनं वञ्चनम् ।

(ख) हला, सत्यं सत्यम् । अस्मत्पुरत आत्मनः सौभाग्यं विख्यापयन्ती पद्मा मालां विवृणोति । कृष्णमित्राणामग्रतः पुनरेनां संवृणोति ।

(ग) गोकुलेश्वरीमुखतोऽद्य सौभाग्यपूर्णिमां श्रुत्वा करालया चन्द्रावली आत्मभर्तुर्मल्लस्य पार्श्वे प्रस्थाप्यते ।

(घ) विशाखे, इष्टदेवः सरोजनाथस्ते प्रसीदतु । तत्त्वर्यताम् ।

---

नायोग्यमेतत् । अनुचितं कृतं कृष्णेनेत्यर्थः ॥ शान्तममङ्गलम् । नास्त्यमङ्गलमित्यर्थः ॥ अम्ह इति । कृष्णमित्राणामग्रतः संवृणोतीति तदानीं कृष्णमण्डलस्थितत्वेन तेषां दृष्टत्वेनैव वा रिता मालेति ज्ञातत्वात् ॥ गोउलेश्वरीति । आत्मभर्तुर्मल्लस्य गोवर्धनमल्लस्य ॥ पुत्रीति ।

राधायामावेद्य मयाप्यस्याः शङ्कापङ्कावलीसंक्षालनाय गौरीतीर्थे भवितव्यम् ।

वृन्दा—भगवति, पूर्वेण गौरीतीर्थं लवङ्गकुडुङ्गस्य प्राङ्गणे सविशाखया राधया सार्धं साधयतु तत्रभवती । तावदावां माधवमासादयावः ।

(पौर्णमासी विशाखया सह निष्क्रान्ता ।)

ललिता—(वृन्दया सह परिक्रम्य ।) हला, पेक्खीअदु डाहिणे एसा दूरदो सेव्वाए समं जप्पन्ती पउमा । (क)

वृन्दा—सखि, नासंगतं व्याहरेद्विशाखा । (इत्यग्रतो गत्वा सविमर्शम् ।) सखि, परमौत्सुक्यसंभूतेन भूरिणा संभ्रमेण संभेदिते राधिकाविनयमनिर्धार्य तूर्णमावां विदूरमागते । तदत्र गङ्गापारे पौर्णमासीं क्षणं प्रतिपालयावः । (इति निष्क्रान्ते ।)

(ततः प्रविशतः पद्माशैव्ये ।)

पद्मा—सहि सेव्वे, मा क्खु दुम्मणा होहि । (ख)

शैव्या—पउमे, परमाहिट्ठस्स अलाहेण सलाहवं चित्तं समाधादुं ण क्खमम्हि । (ग)

(नेपथ्ये ।)

पउमे, चन्दावली आणिज्जउ गोअड्ढणस्स पासम्मि झत्ति । णिव्वट्टइ वच्छा जह कुसुमेहिं सुणेवच्छा । (घ)

शैव्या—पउमे, सुदं जं अज्जिआ कराला तं ज्जेव जप्पगरलं पुणो उग्गिरदि । (ङ)

---

(क) हला, पश्यतु दक्षिणे एषा दूरतः शैब्यया समं जल्पन्ती पद्मा ।

(ख) सखि शैब्ये, मा खलु दुर्मना भव ।

(ग) पद्मे, परमाभीष्टस्यालाभेन सलाघवं चित्तं समाधातुं न क्षमास्मि ।

(घ) पद्मे, चन्द्रावली आनीयतां गोवर्धनस्य पार्श्वे झटिति । निर्वर्तते परमा यथा कुसुमैः सुनेपथ्या ।

(ङ) पद्मे, श्रुतं यदार्या कराला तमेव जल्पगरलं पुनरुद्गिरति ।

---

आवेद्य हन्त ॥ पूर्वेण गौरीतीर्थमिति गौरीतीर्थस्य समीपवर्ति पूर्वेति ॥ ............ ..................हर्षाणि । गोवर्धने संगमिते आगम ॥ पउमे इति । निर्वर्तते

पद्मा—हला, अमिअं क्खु एदं, जं पिविअ उवलद्धबलम्हि जादा। (क)

शैव्या—(सवैलक्ष्यम् ।) हला, कधं विअ । (ख)

पद्मा—मुद्धिए, गोअड्ढणस्स गिरिणो पासे जेव तं गौरीतित्थम्। (ग)

शैव्या—(सहर्षम् ।) सअलत्थपण्डिदासि । ता उट्ठेहि । चन्दाअलिअं तत्थ णेम्ह । (घ)

पद्मा—पढमं चेअ चन्दाअली मए चालिदा । ता तुवरेहि । णं अणुसरम्ह । (ङ)

(इत्युभे परिक्रामतः ।)

शैव्या—पउमे, गौरीकिदे जो क्खु संपादिदो सो कहिं उवहारो। (च)

पद्मा—महुमङ्गलहत्थे समप्पिदोत्थि । (छ)

शैव्या—विवक्खउलस्स उक्करिसं तक्किअ उत्तमामि । (ज)

पद्मा—मा क्खु उत्तम्म । जं एताए मालाए दंसिदाए णिरज्झवसाओ किदो मए विवक्खपक्खो । (झ)

(शैव्या सहर्षं पद्मामालिङ्गति ।)

पद्मा—

सौहग्गपूण्णिमाहे गौरीतीत्थम्हि फुल्लिदे महुणा ।
अज्ज रमन्तीं हरिणा सुहेण चन्दाअलीं पेक्ख ॥ ७ ॥ (ञ)

---

(क) हला, अमितं खल्वेतत्, यत्पीत्वा उपलब्धबलास्मि जाता ।

(ख) हला, कथमिव ।

(ग) मुग्धे, गोवर्धनस्य गिरेः पार्श्व एव तद्गौरीतीर्थम् ।

(घ) सकलार्थपण्डितासि । तदुत्तिष्ठ । चन्द्रावलिकां तत्र नेष्यावः ।

(ङ) प्रथममेव चन्द्रावली मया चालिता । तत्त्वरस्व । एनामनुसरावः ।

(च) पद्मे, गौरीकृते यः खलु संपादितः स कुत्रोपहारः ।

(छ) मधुमङ्गलहस्ते समर्पितोऽस्ति ।

(ज) विपक्षकुलस्योत्कर्षं तर्कयित्वोत्ताम्यामि ।

(झ) मा खलूत्ताम्य । यदेतया मालया दर्शितया निरध्यवसायः कृतो मया विपक्षपक्षः ।

(ञ) सौभाग्यपूर्णिमायां गौरीतीर्थे फुल्लिते मधुना ।
अद्य रममाणां हरिणा सुखेन चन्द्रावलीं पश्य ॥

(नेपथ्ये 'सौहग्गपूणिमाहे' इत्यादि पठ्यते ।)

**शैव्या**—(साद्भुत विलोक्य ।) हला, इमाए मुहं वक्कीकदुअ बीअच्छसरेण पठन्तीए कक्खडिआए अम्हे उवहसिज्जम्ह । (क)

**पद्मा**—(सस्मितम् ।) दुट्ठे मक्कडि, तुण्डं दे डहिस्सम् । (ख)

(नेपथ्ये)

पउमिए, चिट्ठ चिट्ठ । सुण्णं तुज्झ घरं गदुअ णअणिआइं गिलिस्सम् ।(ग)

**शैव्या**—हला, सच्चं सच्चं गिलिस्सदि जं एसा तं चेअ पढन्ती धाइदा । (घ)

**पद्मा**—मा चिन्तेहि । घरे अज्जिआ कराला चिट्ठदि । (ङ) (इति परिक्रम्य संस्कृतेन ।) पश्य पश्य ।

साचीकृताङ्गमिह सव्यकरेण यष्टिं
विष्टभ्य वृत्तसरलामुपकक्षकूपम् ।
तिष्ठन्नधो विटपिनः पशुवृन्दचारी
रारीति गीतिमधुना सुबलस्तनोति ॥ ८ ॥

**शैव्या**—(परिक्रम्य ।) हला, पूव्वेण संकरिसणकुण्डं चन्दाअली दीसइ । (च)

**पद्मा**—(सहर्षं संस्कृतेन ।)

अयं पुरः स्मेरमुखारविन्दः प्रयाणलीलाकृतकुम्भिनिन्दः ।
कलेवरद्योतिहृतासितन्द्रश्चन्द्रावलीं विन्दति कृष्णचन्द्रः ॥ ९ ॥

---

(क) हला, एतया मुखं वक्रीकृत्य बीभत्सस्वरेण पठन्त्या कर्कटिकया वयमुपहस्यामहे ।

(ख) दुष्टे मर्कटि, तुण्डं ते धक्ष्यामि ।

(ग) पद्मे, तिष्ठ तिष्ठ । शून्यं तव गृहं गत्वा नवनीतानि गिलिष्यामि ।

(घ) हला, सत्यं सत्यं गिलिष्यति यदेषा तमेव पठन्ती धाविता ।

(ङ) मा चिन्तय । गृहे आर्या कराला तिष्ठति ।

(च) हला, पूर्वेण संकर्षणकुण्डं चन्द्रावली दृश्यते ।

---

निष्पादयति ॥ साचीकृतेति । वृत्तसरलां यष्टिम् । उपकक्षकूपं कक्षकूपसमीपे विष्टभ्य आलम्ब्य साचीकृताङ्गं यथा स्यात्तथा तिष्ठन् ॥ अयमिति । कुम्भी गजः ॥ प्रिये

(तत प्रविशति कृष्णश्चन्द्रावली च ।)

कृष्णः—(वर्त्मावरुध्य ।) प्रिये, दिष्ट्याद्य सौन्दर्यमकरन्दभृङ्गारायितासि ममाक्षिभृङ्गयो. ।

चन्द्रावली—मुञ्च मग्गम् । जं गौरीतित्थ गदुअ कच्चाअणिअं अच्चिस्सम् । (क)

कृष्णः—(सस्मितम् ।)

लब्धं मामवलोक्य तन्वि पुरतो रोमालिरभ्युद्गता
नेत्रे पाद्यविधिं क्षरज्जलभरैः प्रीत्यार्पयाञ्चक्रतुः ।
वक्षश्च स्खलदुत्तरीयमदिशद्दिव्यासनं सम्भ्रमा
द्वामायास्तव दक्षिण. परिकरो दिष्ट्याद्य वृत्तो मयि ॥ १० ॥

सख्यौ—(उपसृत्य ।) सहि, सन्ति भूरिणो मग्गा । ता एकस्सिं णिरुद्धे णिरुद्धा ण होम्ह । (ख)

चन्द्रावली—(साचिग्रीवमालोक्य ।) हला, दिट्ठिआ तुम्हेहिं सहिदम्हि सवुत्ता । (ग)

कृष्णः—(स्वगतम् ।) कथमद्य राधामभिसिसारयिषोर्ममान्तिके चन्द्रावलिरुपस्थिता ।

पद्मा—(जनान्तिकम् ।) चन्दमुह, पउमावलम्बिकरए त्ति तुह मणोरधं सुणिअ छलेण मए चन्दाअली लम्भिदा । (घ)

कृष्णः—(स्वगतम् ।) आ, ज्ञातम् । पद्ममण्डनमभिलष्यता मयैव दत्तान्तरासि । किं ते दूषणम् । (प्रकाशम् ।) सखि, प्रसिद्धैव पद्मायाः पद्मनाभपक्षपातिता ।

---

(क) मुञ्च मार्गम् । यद्गौरीतीर्थं गत्वा कात्यायनीमर्चिष्यामि ।

(ख) सखि, सन्ति भूरिणो मार्गा । तदेकस्मिन्निरुद्धे निरुद्धा न भवाम ।

(ग) हला, दिष्ट्या युष्माभि सहितास्मि संवृत्ता ।

(घ) चन्द्रमुख, पद्मावलम्बिकरयेति तव मनोरथं श्रुत्वा छलेन मया चन्द्रावली लम्भिता ।

---

इति । भृङ्गार पानपात्रमिति ॥ कथमिति । अभिसिसारयिषो अभिसारयितुमिच्छो ॥

**पद्मा**—अदो तुरिदं गौरीतित्थं लम्भेहि चन्दाअलिअम् । (क)

**कृष्णः**—(स्वगतम् ।) चन्द्रावलेरागतिरेव राधिकोद्यमप्रतिबन्धिनी वृत्ता । तदेनामेव निर्व्यलीकभावां तावत्प्रमोदयन्स्वं मनो विनोदयामि । (प्रकाशम् ।)

धृतपद्मोत्सवसंततिरलब्धदोषोदया सदा स्फुरती ।
सखि कृष्णपक्षपूर्णं चन्द्रावलिरद्भुता त्वमसि ॥ ११ ॥

(इत्यग्रे परिक्रम्य ।) कुरङ्गाक्षि, पश्य काननस्य कमनीयताम् ।

**पद्मा**—हला, एसो पुरदो सुरङ्गणामा कण्हस्स कुरङ्गो । जस्स घरिणी सा किदत्थि रङ्गिणी णाम कुरङ्गी । (ख)

**कृष्णः**—(सचकितं नेपथ्ये कर्णं दत्त्वा स्वगतम् ।) नूनमागता राधा यदयं रङ्गिणीकण्ठध्वनिर्दरोदञ्चति ।

**पद्मा**—कधं एसो सुरङ्गो दक्खिणाहिमुहं धाइदो । (ग)

**कृष्णः**—(पुनरात्मगतम् ।) निष्टङ्कितमेव रङ्गिणीकण्ठशब्देनायमारूढः कुरङ्गो गौरीतीर्थं जगाम । संकर्षणतीर्थतीरवनलेखायां विलम्बमानः क्षणमुदर्कं यामि ।

**पद्मा**—

णअपउमिणीसहस्सं अहमहणरसुत्तरङ्गवित्थारि ।
उअ गोउलं विअ पुरो सरोअरं रेहदि प्फारम् ॥ १२ ॥ (घ)

---

(क) अतश्चरितं गौरीतीर्थं लम्भय चन्द्रावलीम् ।

(ख) हला, एष पुरतः सुरङ्गनामा कृष्णस्य कुरङ्गः । यस्य गृहिणी सा कृतास्ति रङ्गिणी नाम कुरङ्गी ।

(ग) कथमेष सुरङ्गो दक्षिणाभिमुखं धावति ।

(घ) नवपद्मिनीसहस्रमघमथनरङ्गोत्तरङ्गविस्तारि ।
पश्य गोकुलमिव पुरः सरोवरं राजते स्फारम् ॥

---

धृतेति । धृता पद्मायाः पद्मानां चोत्सवसंततिर्यया । न लब्धो दोषाणां दोषाया रात्रेश्चोदयो यस्याः । कृष्णस्य मम, पक्षे कृष्णपक्षे च पूर्णा ॥ निष्टङ्कितमिति । उदर्कमुत्तरकालम् ॥ णअपउमिणीति । पद्मिन्यः पक्षे [illegible] । [illegible]

**कृष्णः**—प्रिये, पश्य पश्य ।

मित्रे विचित्रमनुरागभर वहन्ती
संवर्धितालिनिकरा खरसोदयेन ।
सत्कर्णिकोज्ज्वलरुचिर्भुवने समन्ता-
ल्लक्ष्मीं तनोति भवतीव सरोजिनीयम् ॥ १३ ॥

**शैव्या**—ण मणोहर पउमिर्णी कीस कलाणिहिमलाणं करेदि । (क)

**पद्मा**—(चन्द्रमपदिश्य साकूतम् ।)

सूराणुरत्तहिअआ इअ पउमिणी पसारिदामोआ ।
इह ण तुमं क्खणराओ ताराहीस क्खिवेहि करम् ॥ १४ ॥(क)

**कृष्णः**—पद्मे, नात्र तारापतिरपराध्यति । यदियं पद्मिनी चञ्चलया पद्मया साय मुच्यमाना म्लायति ।

**चन्द्रावली**—(सस्मितं पुरो विलोक्य सस्कृतेन ।)

समदमधुपलौल्योत्सेकमालोक्य शङ्के
विहसति लतिकाली पुष्पशोभाभरेण ।

---

(क) एनां मनोहरा पद्मिनीं कस्मात्कलानिधिम्लाना करोति ।

(ख) सूरानुरक्तहृदया इय पद्मिनी प्रसारितामोदा ।
इह न त्व क्षणरागस्ताराधीश क्षिप करम् ॥

---

सद्य ॥ **मित्रे इति** । मित्रे सूर्ये मयि च । खस्य रसस्य मकरन्दस्य शृङ्गारस्य चोदयेन । संवर्धितोऽलिनिकरो भ्रमरसमूह , आलिनिकर सखीसमूहश्च यया । सत्कर्णिकाभि , पक्षे सुन्दरवर्णालङ्कारैरुज्ज्वला रुचिर्यस्या । भुवने जले लोके च । लक्ष्मीं शोभाम् ॥ **एना-मिति** । अपदेशेन कलानिधि कृष्ण । म्लानामिति राधिकापक्षे निहितसौभाग्यातिशयेन ॥ **सूराणुरत्तेति** । सूरे सूर्य गोवर्धनमल्लभिधशूरे च । दन्त्यसकारतालव्यशकाराभ्या (रयो ) प्राकृते भेदाभावात् श्लेष । आमोद सुगन्धमानन्दश्च । हे ताराधीश चन्द्र, पक्षे ता राहीस तत्तस्माद्धेतो हे राधेश । इह पद्मिन्या चन्द्रावल्या च । करं किरण हस्त च । न क्षिप । त्व क्षणराग क्षणमात्र रागो रक्तिमा अनुरागश्च यस्य स तथा ॥ **पद्मे इति** । तारापतिश्चन्द्र कृष्णश्च । पद्मया लक्ष्म्या सख्या च । मुच्यमाना त्यज्यमाना । रात्रौ पद्म वने लक्ष्मीर्न तिष्ठतीति प्रसिद्धम् । पक्षे साय पद्मया चन्द्रावलीमभिसार्यते मुक्त इत्यर्थ ॥ **समदेति** । लतिकाली अन्यगोपीस्थानीया स्वर्णयूथी चन्द्रावलीस्थानीया श्लेहतो धाष्ट

**पद्मा**—अदो तुरिदं गौरीतित्थं लम्भेहि चन्दाअलिअम्। (क)

**कृष्णः**—(स्वगतम्।) चन्द्रावलेरागतिरेव राधिकोद्यमप्रतिबन्धिनी वृत्ता। तदेनामेव निर्व्यलीकभावां तावत्प्रमोदयन्स्वं मनो विनोदयामि। (प्रकाशम्।)

धृतपद्मोत्सवसंततिरलब्धदोषोदया सदा स्फुरती।
सखि कृष्णपक्षपूर्णं चन्द्रावलिरद्भुता त्वमसि॥ ११॥

(इत्यग्रे परिक्रम्य।) कुरङ्गाक्षि, पश्य काननस्य कमनीयताम्।

**पद्मा**—हला, एसो पुरदो सुरङ्गणामा कण्हस्स कुरङ्गो। जस्स घरिणी सा किदत्थि रङ्गिणी णाम कुरङ्गी। (ख)

**कृष्णः**—(सचकितं नेपथ्ये कर्णं दत्त्वा स्वगतम्।) नूनमागता राधा यदयं रङ्गिणीकण्ठध्वनिर्दरोदञ्चति।

**पद्मा**—कधं एसो सुरङ्गो दक्खिणाहिमुहं धाइदो। (ग)

**कृष्णः**—(पुनरात्मगतम्।) निष्टङ्कितमेव रङ्गिणीकण्ठशब्देनायमाकृष्टः कुरङ्गो गौरीतीर्थं जगाम। संकर्षणतीर्थतीरवनलेखायां विलम्बमानः क्षणमुदर्कं यामि।

**पद्मा**—

णअपउमिणीसहस्सं अहमहणरसुत्तरङ्गवित्थारि।
उअ गोउलं विअ पुरो सरोअरं रेहदि प्फारम्॥ १२॥ (घ)

---

(क) अतस्त्वरितं गौरीतीर्थं लम्भय चन्द्रावलीम्।

(ख) हला, एष पुरतः सुरङ्गनामा कृष्णस्य कुरङ्गः। यस्य गृहिणी सा कृतास्ति रङ्गिणी नाम कुरङ्गी।

(ग) कथमेष सुरङ्गो दक्षिणाभिमुखं धावितः।

(घ) नवपद्मिनीसहस्रमथमथनरसोत्तरङ्गविस्तारि।
पश्य गोकुलमिव पुरः सरोवरं राजते स्फारम्॥

---

धृतेति। धृता पद्मायाः पद्मानां चोत्सवसंततिर्यया। न लब्धो दोषाणां दोषायां रात्रौ चोदयो यस्याः। कृष्णस्य मम, पक्षे कृष्णपक्षे च पूर्णा॥ निष्टङ्कितमिति। उदर्कमुत्तरकालम्॥ णअपउमिणीति। पद्मिन्यः कमलानि स्त्रियश्च। रङ्गो जलं शृङ्गारादि-

कृष्णः—प्रिये, पश्य पश्य ।

मित्रे विचित्रमनुरागभरं वहन्ती
संवर्धितालिनिकरा स्वरसोदयेन ।
सत्कर्णिकोज्ज्वलरुचिर्भुवने समन्ता-
ल्लक्ष्मीं तनोति भवतीव सरोजिनीयम् ॥ १३ ॥

शैब्या—णं मणोहरं पउमिणीं कीस कलाणिहिमलाणं करेदि । (क)

पद्मा—(चन्द्रमपदिश्य साकूतम् ।)

सूराणुरत्तहिअआ इअं पउमिणी पसारिदामोआ ।
इह ण तुमं क्खणराओ ताराहीस क्खिवेहि करम् ॥ १४ ॥(क)

कृष्णः—पद्मे, नात्र तारापतिरपराध्यति । यदियं पद्मिनी चञ्चलया पद्मया सायं मुच्यमाना म्लायति ।

चन्द्रावली—(सस्मित पुरो विलोक्य संस्कृतेन ।)

समदमधुपलौल्योत्सेकमालोक्य शङ्के
विहसति लतिकाली पुष्पशोभाभरेण ।

---

(क) एनां मनोहरां पद्मिनीं कस्मात्कलानिधिम्लानां करोति ।

(ख) सूरानुरक्तहृदया इयं पद्मिनी प्रसारितामोदा ।
इह न त्वं क्षणरागस्ताराधीश क्षिप करम् ॥

---

राध ॥ मित्रे इति । मित्रे सूर्ये मयि च । स्वस्य रसस्य मकरन्दस्य शृङ्गारस्य चोदयेन । संवर्धितोऽलिनिकरो भ्रमरसमूहः, आलिनिकरः सखीसमूहश्च यया । सत्कर्णिकाभिः, पक्षे सुन्दरवर्णालङ्कारैरुज्ज्वला रुचिर्यस्याः । भुवने जले लोके च । लक्ष्मीं शोभाम् ॥ एना-मिति । अपदेशेन कलानिधिः कृष्णः । म्लानामिति राधिकापक्षे निहितसौभाग्यातिशयेन ॥ सूराणुरत्तेति । सूरे सूर्ये गोवर्धनमल्लाभिधशूरे च । दन्त्यसकारतालव्यशकाराभ्यां (रयोः) प्राकृते भेदाभावात् श्लेषः । आमोदः सुगन्धमानन्दश्च । हे ताराधीश चन्द्र, पक्षे ता राहीस तस्माद्धेतो हे राधेश । इह पद्मिन्यां चन्द्रावल्यां च । करं किरण हस्त च । न क्षिप । त्व क्षणरागः क्षणमात्र रागो रक्तिमा अनुरागश्च यस्य स तथा ॥ पद्मे इति । ताराधिपश्चन्द्रः कृष्णश्च । पद्मया लक्ष्म्या सख्या च । मुच्यमाना त्यज्यमाना । रात्रौ पद्म-वने लक्ष्मीर्न तिष्ठतीति प्रसिद्धम् । पक्षे सायं पद्मया चन्द्रावलीमभिसार्यते कुत इत्यर्थः ॥ समदेति । लतिकाली अन्यगोपीस्थानीया स्वर्णयूथी चन्द्रावलीस्थानीया श्लेषो वाच्य-

विसृजति मकरन्दच्छद्मना बाष्पबिन्दू-
नियमतिमृदुरेका स्नेहतः स्वर्णयूथी ॥

कृष्णः—प्रिये, पश्य पश्य ।

अयमुच्चशिराः कदम्बराजः स्फुरदिन्दिन्दिरवृन्दवन्दिगीतः ।
सुरभीकुलपुच्छचामरालीमरुदावीजितविग्रहश्चकास्ति ॥ १६ ॥

चन्द्रावली—अम्हहे, ललिदा वुन्दावणलच्छी । (क)

(ततः प्रविशति ललिता वृन्दा च ।)

ललिता—(पुरो दृष्ट्वा सव्यथम् ।) कक्खडं पुरादो संकडं एदो । (ख)

वृन्दा—हन्त, दुर्लङ्घ्यशासना किल कराला । तत्कथमद्य पद्मयात्र चन्द्रावलिरुपनीता ।

ललिता—हला, सअलविज्जाविअड्ढासि । ता कड्ढेहि इदो कण्हम् । (ग)

वृन्दा—

स्वस्य प्रेममणीनां गौरवभाजामियं वरा यात्री ।
हरिणा परिहरणीया कथं नु चन्द्रावली भविता ॥ १७ ॥

ललिता—(संस्कृतेन ।)

यस्योपलभ्य गन्धं गौरवकुलमाशु चौरयक्रमति ।
उद्भटमनुरागभटं तं रञ्जितनागरं नौमि ॥ १८ ॥

वृन्दा—सखि, युक्तं ब्रवीषि । किंतु दाक्षिण्यमुद्रेयं चन्द्रावल्या कृष्णस्य ततः खल्वमुं दुराकर्षं कथयामि ।

ललिता—वुन्दे, सच्चं भणासि । ता इमस्सिं अचाहिदे किं सरणम् । (घ)

(क) अम्महे, ललिता वृन्दावनलक्ष्मीः ।

(ख) कठिनं पुरतः संकटमेतत् ।

(ग) हला, सकलविद्याविदग्धासि । तत्कर्षय इतः कृष्णम् ।

(घ) वृन्दे, सत्यं भणसि । तदस्मिन्नत्याहिते किं शरणम् ।

बिन्दूनिति स्वस्य प्रेमाधिक्यं सूचितम् ॥ अयमिति । इन्दिन्दिरवृन्दानि भ्रमरसमूहास्त एव वन्दिनः स्तावकास्तैर्गीतः । अनेनैव सर्वासामाश्रयोऽप्ययमेव भगवत्येव एक-मीति सूचितम् ॥ गौरवभाजामिति । अस्या एतत्प्रेमादरगमकत्वात् ॥ यस्येति । यस्यानुरागभटस्य मधुप्रेहस्येत्यर्थः । 'भटा योधाश्च योद्धारः' इत्यमरः ॥ 'अत्याहितं म-

वृन्दा—प्रथमं गोष्ठीमाविश्य तत्त्वमवधारयावः

(इत्युभे परिक्रामतः ।)

शैव्या—(विलोक्य जनान्तिकम् ।) हला पउमे, हन्त णूणं गौरीतीत्थे राही संगदा । पेक्ख तद्दिसादो ललिदा मिलदि । (क)

पद्मा—का णो हाणी जं हरिणा दुःपरिहरा पिअसही । (ख)

ललिता—(उपसृत्य ।) हला चन्दाअलि, वल्लहासिणेहाणहिण्णस्स कुरङ्गीसङ्गभुअङ्गस्स कुरङ्गस्स घरे ण क्खु अम्हेहिं रङ्गिणीवासणिज्जा । जं इमिणा मासब्भन्तरे वि सा कालसारकुमारी ण सुमरीअदि ता एत्थ तुमं सक्खिणीं कादुं आअदम्हि । (ग)

(चन्द्रावली स्मयते ।)

कृष्णः—(स्वगतम् ।) हन्त, मदर्थमागता ललिता । (चन्द्रावलीमालोक्य छलमालम्बते । प्रकाशम् ।) ललिते, हृदयेङ्गितमविज्ञाय मुधा सुरङ्गमुपालभसे । तदेष संदेशस्त्वया तस्यामावेद्यताम् ।

हरिणाभिलप्यमाणा सारङ्गरमणि सदा त्वमत्रासि ।
तदमुं त्वद्वशहृदयं हृदयंगमलोचने विद्धि ॥ १९ ॥

पद्मा—(जनान्तिकम् ।) कण्ह, अप्पणो पिअजणं लद्धोसि । ता जुत्तं अजोअजोग्गाणं अम्हाणं विसज्जणम् । (घ)

---

(क) हला पद्मे, हन्त नूनं गौरीतीर्थे राधा संगता । पश्य तद्दिशातो ललिता मिलति ।

(ख) का नो हानिः यद्धरिणा दुष्परिहरा प्रियसखी ।

(ग) हला चन्द्रावलि, वल्लभास्नेहानभिज्ञस्य कुरङ्गीसङ्गभुजङ्गस्य कुरङ्गस्य गृहे न गल्वस्माभी रङ्गिण्यावासः कारयितव्यः । यदनेन मासाभ्यन्तरेऽपि सा कालसारकुमारी न स्मर्यते तदत्र त्वां साक्षिणीं कर्तुमागतास्मि ।

(घ) कृष्ण, आत्मनः प्रियजनं लब्धोऽसि । तद्युक्तमयोगयोग्यानामस्माकं विसर्जनम् ।

---

हानीतिः' इत्यमरः ॥ का णो इति । नः अस्माक का हानिः ॥ स्मयत इति । कृष्णागारमपदिश्य कृष्ण प्रति इतो निष्क्रम्यताभिलनया व्यज्यते तदसंभवमिति स्मयः ॥ हरिणेति । हरिणा हरिणेन कृष्णेन चाभिलप्यमाणा सदा त्वमसि । हे सारङ्गरमणि मृगकान्ते,

कृष्णः—

करवाणि हन्त दिव्यं दिव्याङ्गि मदोन्नतासु गोपीषु ।
अनुरागितां सखि दधे राधागन्धिषु न वामासु ॥ २० ॥

पद्मा—(सदर्पस्मितम् ।) सहि ललिदे, अच्चरिअं अच्चरिअम् । तुमं क्खु अणुराहा भणिज्जसि । ता कीस अज्ज राहाए उअअं विणा उइदासि । (क)

ललिता—(संस्कृतेन ।)

रोलम्बीनिकुरम्बं चुम्बति गण्डं पिपासया तस्य ।
सरति तृषार्तः सरसी स करीन्द्रस्तं पुनर्न हि सा ॥ २१ ॥

पद्मा—

एक्कं धीमदि सेब्बे पहेलिअं मे सहेलि जाणेहि ।
चित्तफलअम्मि लिहिदा का रेहइ माहवस्स सदा ॥ २२ ॥ (ख)

शैब्या—सहि चन्दाअली । (ग)

---

(क) सखि ललिते, आश्चर्यमाश्चर्यम् । त्वं खल्वनुराधा भण्यसे । तत्कस्मादद्य राधाया उदयं विना उदितासि ।

(ख) एकां धीमति शैब्ये प्रहेलिकां मे सखि जानीहि ।
चित्तफलके लिखिता का राजते माधवस्य सदा ॥

(ग) सखि चन्द्रावली ।

---

सारङ्गायतीति सारङ्गः कृष्णस्तस्य कान्ते इति च ॥ करवाणीति । राधागन्धिषु वामासु प्रतिकूलासु गोपीष्वनुरागितां न दधे । तत्र प्रतीत्यर्थं दिव्यं शपथं करवाणि । 'हरिणाभिलष्यमाणा' इत्यादिना रागस्त्वय्यानुरञ्जनार्थं वाङ्मात्रेणैव व्यञ्जित इति भावः । श्लेषोऽर्थः पद्मया ज्ञापयितुमभिप्रेतः । वस्तुतस्तु राधागन्धिषु गोपीष्वनुरागितां दधे । किमुत राधायामिति भावः । मदोन्नतासु परमाकर्षकमधुस्रवतीत्वेन मम परमसुखदो मद उत्पन्न एवेति भावः । न वामासु धीरास्वप्रतिकूलास्वनुरागितां न दधे इति दिव्यं करवाणीति ॥ सखीति । ज्योतिःशास्त्रे विशाखानक्षत्रस्योदयानन्तरमेवानुराधाया उदयसंभवात् ॥ रोलम्बीति । रोलम्बीनिकुरम्बं भ्रमरीसमूहमस्य करीन्द्रस्य गण्डं कर्णापानं मुहुर्मुहुराहृत्य सदा । पिपासया तृष्णया चुम्बति । तृषार्तः सन् करीन्द्र एव सरसी सरति याति । सा सरसी तु तं न याति । कृष्णेनानाहूता अपि यथा भ्रमर्यो रतिसाधिकाः कृष्णमभिसरन्ति, न च तस्य सुखलेशं कुर्वन्ति, प्रत्युत उद्वेगमेव जनयन्ति, तथा राधादास

**वृन्दा**—(सस्मितम् ।) साधु विज्ञातम् । चन्द्रमण्डलावलिमण्डनेन चित्रं खलु मापतेः फलकं शतचन्द्रमाचक्षते ।

**कृष्णः**—(स्वगतम् ।) अवदातशीलेयम् ।

(चन्द्रावली सलज्जमपसव्ये प्रयाति ।)

**ललिता**—

मम वाहरेहि वुन्दे पहेलिअं दिप्पहेलिविण्णाणे ।
पिअसहि किमहिक्खाए लिक्खिज्जइ माहवो भुअणे ॥ २३ ॥(क)

**वृन्दा**—सखि, राधाभिख्यया ।

**कृष्णः**—युक्तमिदं यद्वैशाखपर्यायौ माधवराधौ ।

**पद्मा**—सेव्वे, अलं पहेलिआपसङ्गेण । सुहावेहि कमलिक्खणरसेहिं अत्ताणअम् । (ख)

---

(क) मम व्याहर वृन्दे प्रहेलिकां दीप्रहेलिविज्ञाने ।
प्रियसखि किमभिख्यया लक्ष्यते माधवो भुवने ॥

(ख) शैव्ये, अलं प्रहेलिकाप्रसङ्गेन । सुखय कमलेक्षणरसैरात्मानम् ।

---

भवन्ति । राधां पुनरयमेवाभिसरति परमसुखसपादनायेति भावः ॥ **सस्मितमिति** । भवत्योरेव प्रश्नोत्तराभ्यां श्लोकमिदमुदासीनविषय करवाणीति व्यञ्जनाय मापतेर्लक्ष्मीपतेः फलक चर्म श्चाचक्षते पौराणिकाः। तेन 'चित्तफलअम्मि' इत्यत्र चित्रफलके इति, माधवस्य लक्ष्मीपत्युरिति, चन्द्रावलीत्यत्र चन्द्रमण्डलपङ्क्तिरिति व्याख्या ॥ **अवदातेति** । अवदातशीला शुद्धशीला । 'अवदातः शिते शुते शुद्धे (सितो गौरो)' इत्यमरः ॥ एताभ्या प्रहेलिकया वर्णितः स्वपक्षोत्कर्ष आवाभ्यामन्यया कृतः । इदानीमावाभ्यामपि कथ तथा न वर्ण्यते एताभ्यामन्यथाकर्तुमशक्यत्वादित्याह—**मम वाहरेति** । दीप्रहेलीनां श्रेष्ठप्रहेलिकानां विज्ञानं यस्या हे तथाभूते, कस्याभिख्यया नाम्ना शोभया वा माधवो लक्ष्यते ॥ राधाभिख्ययेति राधानाम्ना । 'अभिक्षा(ख्या) नामशोभयोः' इत्यमरः । तथा हि वेदे—'राधया माधवो देवो माधवेनैव राधिका। विभ्राजन्ते' इति । लोके च राधामाधव इति प्रसिद्ध्या लक्ष्यत इत्यर्थः । ततश्च राधाया माधव इति षष्ठीसमासेन परमोत्कर्षो व्यक्तितो भवति । इदानीमपि यथा विन्दुमाधववेणीमाधवादयस्तथा राधामाधव इति प्रसिद्धादेव प्रतिमा काचिदासीत्तदपदेशेन कृष्णमुद्दिश्येयमुक्तिरिति ॥ **वैशाखपर्याया-विति** । 'वैशाखे माधवो राधो' इत्यभिधानात्, माधवशब्दस्य प्रसिद्धत्वेनाभ्यर्हितत्वा-त्पूर्वनिपातः । तेन किमभिक्ष(ख्य)येत्यस्य कयाभिख्यया केन नाम्नेत्यर्थः । तया राधा-भिख्ययेत्यस्य राधस्याभिख्ययेति व्याख्या । कृष्णेन यदन्यथा व्याख्यात तत्तारो व्याख्या-

**शैव्या**—(कमलाकर विलोक्य ।)

भमरस्स ताव पमदं पदोसमुदिदा कुमुद्दी कुणइ ।
जाव इअं पउमाली विन्दइ ण हु दिट्ठिमेदस्स ॥ २४ ॥ (क)

**पद्मा**—हला, सच्च भणासि । तथा हि ।

विज्जोदन्ती राहा पेक्खिज्जइ ताव तारआलीहिम् ।
गअणे तमालसामे ण जाव चन्दाअली फुरइ ॥ २५ ॥ (ख)

**ललिता**—(विहस्य । सस्कृतेन ।)

सहचरि वृषभानुजया प्रादुर्भावे वरत्विषोपगते ।
चन्द्रावलीशतान्यपि भवन्ति निर्धूतकान्तीनि ॥ २६ ॥

**कृष्णः**—(स्मित्वा ।) किं वाचाटतया । सनिकृष्टस्य सुरभेः सौरभ्यमनुभूयताम् ।

**वृन्दा**—(सस्मितम् ।)

उल्लसति फुल्लगात्री का वल्ली नात्र माधवेऽभ्युदिते ।
तन्नामतः प्रसिद्धा तथापि ता माधवीं नौमि ॥ २७ ॥

---

(क) भ्रमरस्य तावत्प्रमदं प्रदोषमुदिता कुमुद्वती कुरुते ।
यावदियं पद्मालीं विन्दति नहि दृष्टिमेतस्य ॥

(ख) हला, सत्यं भणसि । तथा हि ।
विद्योतमाना राधा प्रेक्ष्यते तावत्तारकालीभिः ।
गगने तमालश्यामे न यावच्चन्द्रावलिः स्फुरति ॥

---

नाशक्तिज्ञापनायैव ॥ **सेव्ये इति** । कमलेक्षण कृष्ण ॥ **भमरस्सेति** । भ्रमरस्य, पक्षे कामुकत्वात् कृष्णस्य प्रदोषे रजन्यादौ मुदिता विकसिता, प्रहृष्टदोषेऽपि कुमुद्वती कुमुद कुत्सितानन्दवतीत्वेन राधा च । पद्माली पद्मसमूह , पद्मा आली सखी यस्या सा चन्द्रावली च ॥ **विज्जोदन्तीति** । तारकालीभि सह राधा विशाखानक्षत्र तमालश्यामे गगने तावद्विद्योतमाना प्रेक्ष्यते । पक्षे तारकालीभिर्विशाखासखिप्रभृतिभि । गगने तमालश्यामे इति व्यपदेशेन कृष्णे ॥ **विहस्येति** । द्वयो पद्मयोरर्थमेकश्लोकार्थेनैव चूर्णयिष्ये इति भाव ॥ **सहचरीति** । वृषस्थभानुजनितया श्रेष्ठत्विषा, पक्षे वृषभानुजया राधया । कीदृश्या । वरत्विषा । प्रादुर्भावे प्राकट्ये उपगते प्राप्ते सति ॥ **स्मित्वेति** । सुरभेर्वसन्तस्य ॥ **उल्लसतीति** । माधवे वसन्ते, कृष्णे च । माधवीं

**पद्मा**—(सवैमनस्यं परिक्रम्योच्चैः ।) हला चन्दाअलि, धुत्तो गोट्ठीरङ्गे संगमिअ विग्घेसजणणीपूअणे कीस सिढिलासि । (क)

**कृष्णः**—(सोपालम्भम् ।)

चन्द्रावलीं मामनुरुध्यमानां रुणद्धि पद्मे भवती बलेन ।
मल्लीं तमालाभिमुखं मिलन्तीं हिंस्रेव वल्ली पुरतः कराला ॥ २८ ॥

(प्रविश्य ।)

**कराला**—चिट्ठध रे, चिट्ठध । दिट्ठिआ मग्गे च्चेअ लद्धात्थ । (ख)

(सर्वाः परावृत्य संभ्रम नाटयन्ति ।)

**शैव्या**—(अपवार्य ।) पउमे, हद्धी हद्धी । कधं एत्थ अम्हे विण्णादा बुड्ढिआए । (ग)

**कराला**—अम्मो, सच्चं च्चेअ जप्पिदं ताए णवणिअलम्पडाए बुड्ढमक्कडीए । (घ)

(पद्मा सखेद शैव्यामुखमीक्षते ।)

**ललिता**—(स्वगतम् ।) बुड्ढमक्कडि कक्खडिए, सक्करामक्खिदं मक्खणं दे दाइस्सम् । (ङ)

**कृष्णः**—(अपवार्य ।) प्रिये, तिरोधानाय स्थानमपि ते न पश्यामि । यतः ।

सव्ये गिरिः स्फुरति दुर्गमतुङ्गशृङ्गो
गाः पालयत्यहह दक्षिणतस्तथार्यः ।

---

(क) हला चन्द्रावलि, धूर्तो गोष्ठीरङ्गे संगम्य विघ्नेशजननीपूजने कस्माच्छिथिलासि ।

(ख) तिष्ठत रे, तिष्ठत । दिष्ट्या मार्ग एव लब्धास्थः ।

(ग) पद्मे, हा धिक् हा धिक् । कथमत्र वयं विज्ञाता वृद्धया ।

(घ) अम्मो, सत्यमेव जल्पितं तया नवनीतलम्पटया वृद्धमर्कट्या ।

(ङ) वृद्धमर्कटि कर्कशटिके, शर्करामृक्षितं नवनीतं ते दास्यामि ।

---

तमालल्ताम्, राधां च ॥ चन्द्रावलीमिति । मामनुरुध्यमानां मामनुरुन्धती । दैवादिकस्य रुधे रूपम् । हिंस्रा हिंस इति ख्याता । कराला भयकरी ॥ अम्मो इति । देश-

भूः पृष्ठतो विरहिता धृतिभिः पुरस्ता-
त्क्रूरां विवेश जरती कतमात्र युक्तिः ॥ २९ ॥

**चन्द्रावली**—(स्वगतम्।) हन्त हन्त। अकण्डे कक्खसाए भविदव्वदा चण्डालीए चण्डिमा। (क)

**कराला**—(संरम्भमभिनीय।) पेच्छध भो, पेच्छध इमस्स कुसुम्मतेल्लकज्जलजालकालस्स कालभुअङ्गभअंकरलोअणञ्चलस्स चञ्चलस्स भुअङ्गत्तणम्, जं वारहमग्गं गमिदो इमिणा सअलाणं गोउलकुलङ्गणाणं मङ्गलो कुलधम्मो। (इति सशिरःकम्पं दृशौ विस्फार्य।) अरे सामलआ, कस्स एसा जाआत्ति जाणासि। सुणाहि रे, णीसङ्कं सुणाहि। जो क्खु भोइन्दस्स दुदीउअप्पा तस्स महामल्लस्स। (ख)

**कृष्णः**—करालिके, ततः किम्।

**कराला**—(सक्रोधम्।) सच्चं सच्चं तुमं वणमज्झे अप्पाणं दुदिअं राआणं जाणासि। सो च्चेअ राअउलगामी गोट्ठणाहो अप्पणो ललाडं ताडिस्सदि। (ग)

**कृष्णः**—कराले, तुभ्यं शपे। चन्द्रावलीं विलोक्य साध्वसं गतोऽहमुद्वेगमासादयामि।

---

(क) हन्त हन्त। अकाण्डे कर्कशाया भवितव्यता चण्डाल्याश्चण्डिमा।

(ख) पश्यत भोः, पश्यत अस्य कौसुमतैलकज्जलजालकालस्य कालभुजङ्गभयंकरलोचनाञ्चलस्य चञ्चलस्य भुजङ्गत्वम्, यद्द्वादशमार्गं गमित एतेन सकलानां गोकुलकुलाङ्गनानां मङ्गलः कुलधर्मः। अरे श्यामला, कस्यैषा जायेति जानासि। शृणु रे, निःशङ्कं शृणु। यः खलु भोजेन्द्रस्य द्वितीयात्मा तस्य महामल्लस्य।

(ग) सत्यं सत्यम्। त्वं वनमध्य आत्मानं द्वितीयं राजानं जानासि। स एव राजकुलगामी गोष्ठनाथ आत्मनो ललाटं ताडिष्यति।

---

भाषाक्रोधव्यञ्जिका ॥ **पेच्छध इति**। भुजङ्गत्वं कामुकत्वम्। **द्वादशमार्गं गमित इति**। स्त्रीजातिभाषेयं 'वारहवाटे द्वारिओ' इत्यपभ्रंशे ख्याता ॥ **सच्चमिति**। अय भावः—राजसभायां तव दुर्वृत्ते ज्ञापिते सति राजदण्डभयान् क्वापि वनमध्ये लीनं त्वामप्राप्य राजपदान्तिके तव पितैव नन्दो राजसंनिधिं नीयमानस्त्वन्नैतादृशो दुर्वृत्तः पुत्रो मे जात इति लज्जया दुःखेन च मग्नो भविष्यतीति ॥ **कराले इति**। साध्वसं भयम्, पक्षे साधु

**कराला**—(चन्द्रावलीं विलोक्य । सामर्षम् ।) हा णिउञ्जोज्जाअरिणि, आकोमारसिक्खिदकण्हाहिसारकोसले, संरम्भोन्नद्धगोविआसहस्सोच्छिट्ठाहरबिम्बतिण्हामेत्तविद्धंसिदकुलव्वदे, चिट्ठ चिट्ठ । किं दाणिं भाएसि । (क)

**ललिता**—अज्जे, को क्खु दोसो जीअणणाहाणुगदाए पच्छिमदीसाए । को वा दोसावहारिणो सूरस्स । किंतु एदाणं आरूढराआणं दोणं राअं उप्पादिअ संगमकारिणीए संझाकुट्टिणीए च्चेअ पदोसाणुबन्धिदा । (ख)

**कराला**—जादे, सच्चं कधेसि । (इति प्रौढमाटोपं नाटयन्ती ।) हञ्जे पउमिए, परघरविरहिणि, कुट्टिणीकम्मलम्पडे, घण्ठीमण्डलचक्कवट्टिणि, मह हत्थादो कहं मुक्किस्ससि । (ग) (इति यष्टिमुद्यच्छति ।)

**पद्मा**—(परावृत्य ।) अज्जे, ण जाणे कीस खिज्जसि । अम्हेहिं तुज्झ सासणं चेअ किज्जन्तं अत्थि । (घ)

---

(क) हा निकुञ्जोज्जागरिणि, आकौमारशिक्षितकृष्णाभिसारकौशले, संरम्भोन्नद्धगोपिकासहस्रोच्छिष्टाधरविम्बतृष्णामात्रविध्वंसितकुलव्रते, तिष्ठ तिष्ठ । किमिदानीं बिभेषि ।

(ख) आर्ये, कः खलु दोषो जीवननाथानुगतायाः पश्चिमदिशः । को वा दोषापहारिणः सूर्यस्य । किंत्वेतयोरारूढरागयोर्द्वयो रागमुत्पाद्य संगमकारिण्याः संध्याकुट्टिन्या एव प्रदोषानुबन्धिता ।

(ग) जाते, सत्यं कथयसि । हञ्जे पद्मिके, परगृहविघट्टके कुट्टिनीकर्मलम्पटे, घण्टीमण्डलचक्रवर्तिनि, मम हस्ततः कथं मोक्ष्यसि ।

(घ) आर्ये, न जाने कस्मात्खिद्यसे । अस्माभिर्युष्मच्छासनमेव क्रियमाणमस्ति ।

---

अग्रतः अग्रासरः सन् । उद्वेगं दुःखम् ॥ अज्जे इति । जीवननाथो जलाधिपो वरुणः, व्यपदेशेन चन्द्रावल्या विशेषण जीवननाथः स्वपतिर्मतः । वस्तुतस्तत्रापि सरस्वती भाषिते जीवननाथः कृष्णः । को वा दोषापहारिणः सूर्यस्य दोष इत्यनुषङ्गः । दोषा रात्रिस्तमारकस्य, पक्षे दोषाणामपहारिणः, किंवा दोषायां रात्रावपहारिणः गोचारस्य कृष्णस्य । दोषाभावे हेतुगर्भविशेषणमेतत् । श्लेषेण सूर्यपक्षे कृष्णपक्षेऽपि । रागं रक्तिमानं प्रदोषो रजनीमुखं तदनुबन्धिता । पक्षे रागमासक्तिम् । पश्चिमदिक्सूर्यस्थानीययोरसंभावितयोरपि चन्द्रावलीकृष्णयोः गङ्गरारदिग्मः संध्यास्थानीयपद्माया एव प्रकृष्टदोषानुबन्धित्वमित्यर्थः । तेन पद्मा इदं तस्येनामिति भावः ॥ जाते इति । जाते

**वृन्दा**—(स्वगतम्।) नूनं धूर्तया शब्दच्छलमालम्बितं पद्मया। (प्रकाशम्।) आर्ये, शैलमल्लयोर्नामाद्वैतेन भ्रान्तेयं मुग्धा बाला। तदद्य क्षम्यताम्।

(कराला यष्टिं विमुञ्चति।)

**पद्मा**—(स्वगतम्।) ललिदे, चिट्ठ चिट्ठ। तुह णिक्किदं कादुं एसा जडिलं गच्छन्ती म्हि। (क) (इति निष्क्रान्ता।)

**कराला**—(चन्द्रावलीमालोक्य।) एहि भो कुडुङ्गकुडुङ्गिणि, एहि। (ख)

(इति चन्द्रावलीमादाय शैव्यया सह निष्क्रान्ता।)

**कृष्णः**—(सोच्छ्वासम्।) वृन्दे, नूनं साधितार्थोसि।

**वृन्दा**—माधव, रूपिणी माधवलक्ष्मीर्गौरीतीर्थे खेलति। तया चोपढौकितं सर्वस्वमिदं दरोन्मुद्रितं गन्धफलीद्वन्द्वम्।

**कृष्णः**—(सानन्दमादाय।) वृन्दे, यावद्भवां चारणे वयस्यानवधार्य तत्रानुसरामि, तावद्भवतीभ्यामग्रतः प्रस्थीयताम्। (इति निष्क्रान्तः।)

**वृन्दा**—(परिक्रम्य।) ललिते, पुरः संभावय कदम्बसम्राजम्। (इत्युपेत्य।) हन्त हन्त।

शङ्के पङ्कजसंभवोऽपि भवतः सौभाग्यभङ्गीभरं
वक्तुं न क्षमते कदम्बनृपते वृन्दाटवीद्योतिनः।
पुष्पैर्यस्य रमासहोदरतयाप्युद्भासुरं कौस्तुभं
दुर्लीलैरवहेलयद्भिरभितः शौरेरुरश्छाद्यते॥ ३०॥

---

(क) ललिते, तिष्ठ तिष्ठ। तव निष्कृतं कर्तुमेषा जटिलां गच्छन्त्यस्मि।

(ख) एहि भो कुटुम्बकुटुम्बिनि, एहि।

---

हे पुत्रि। हञ्जे हे चेटिके। कुट्टिनीकर्म परपुरुषदूत्य तत्र लम्पटे। 'णिज्जउ गोवड्ढणस्स पासम्मि' इति त्वया पूर्वमादिष्टादिति भावः॥ **माधवेति**। हे माधव, रूपिणी रूपवती वसन्तशोभा। माधवस्य तव लक्ष्मीः शोभारूपा संपत्तिरूपा या राधा इति च। गन्धफलीद्वन्द्व चम्पकयुगलम्॥ **शङ्के इति**। यस्य तव पुष्पैः। कीदृशैः। कौस्तुभमवहेलयद्भिः। कीदृशी। रमासहोदरतया। अधिकारात् स्वरूपेण च। उद्भासुरं देदीप्यमानम्। दुर्लीलैरिति

ललिता—(पुरो विलोक्य ।) वुन्दे, इअं विसाहादुदिआ भअवदी माअन्दकुञ्जे पच्छन्नं चिट्ठदि । (क)

वृन्दा—(लवङ्गलतान्तिके राधां विलोक्य ।) ललिते, पश्य पश्य ।

किमितः सुषमा वपुष्मती किमभिव्यक्तिरलं गुणश्रियः ।
अथ वा प्रणयाभिसंपदः किमियं मूर्तिरुदेति राधिका ॥ ३१ ॥

(पुनर्निरूप्य ।)

कर्णालंकृतकमला कुन्तलवेणीशिखोच्चलत्कमला ।
करकमलाश्रितकमला विडम्बयत्यलमसौ कमलाम् ॥ ३२ ॥

(नेपथ्ये ।)

कर्णान्दोलितमुग्ध·····फलिकाद्वन्द्वः कदम्बस्रजा
सवीतो मुरलीकराम्बितकरश्चूडाञ्चले चन्द्रिका ।
दूरादेष मनःशिलातिलकिना भालेन बिभ्रद्द्युतिं
मूर्तः खेलति हन्त नन्दगृहिणीवात्सल्यलक्ष्मीरसः ॥ ३३ ॥

ललिता—णूणं भअवदीए दूरे दिट्ठो कण्हो, जं वण्णीअदि । (ख)

वृन्दा—ललिते, सत्यमविदूरवर्ती मधुवैरी । तथा हि ।

सखि कुण्डलीकृतशिखण्डमण्डलो
नटतीह ताण्डविकहूतिरण्डजः ।
न कदापि कृष्णमुदिरेक्षणं विना
मुदिरेक्षणे क्षणमपि श्वसित्यसौ ॥ ३४ ॥

(क) वृन्दे, इयं विशाखाद्वितीया भगवती माकन्दकुञ्जे प्रच्छन्नं तिष्ठति ।

(ख) नूनं भगवत्या दूरे दृष्टः कृष्णः, यद्वर्ण्यते ।

तादृश कौस्तुभ हेलयैव भौनिर्माल्यानि भाव. ॥ वृन्दे इति । माकन्दकुञ्जे आम्रकुञ्जे ॥ कर्णेति । कमला लक्ष्मीम् ॥ कर्णेति । नन्दगृहिणीवात्सल्य इत्यनेन व्रजेश्वर्या लालनेनैव कृष्णस्य परमसौन्दर्यमिदं जातम् । अहो तस्या भाग्यपरिपाक इति भाव ॥ सखीति । ताण्डविक इति नाम्ना हूतिराह्वानं यस्य । अण्डज पक्षी मयूर । कृष्ण एव मुदिरो मेघस्तस्येक्षणम् ।

१ 'निरेत्य' इति मूलपुस्तकपाठ

ललिता—सहि, दक्खिणेण पुंणाअसण्डं पेक्ख पुण्डअमण्डपे णम् । (क)

वृन्दा—(विलोक्य । सहर्षम् ।)

चक्रं वशीकृतवतः किल नैचिकीनां
वंशीनिनादमधुना मधुसूदनस्य ।
आभीरशेखरगतिं प्रतिपादयन्ती
शोभा बभूव परमा परमस्य यष्टिः ॥ ३५ ॥

ललिता—ण वुत्तं दाणिं पि दोणं अण्णोण्णदंसणम् । केअलं रङ्गिणिअं पेक्खिअ लअङ्गकुडङ्गं पविसदि कण्हो । (ख)

वृन्दा—पश्य पश्य ।

विस्मरान्परितो हरिमूर्तितः परिगलानुपलभ्य कलावती ।
इयमितः सखि पुण्ड्रकमण्डपे सितमुखी तनुवल्लिमपावृणोत् ॥ ३६ ॥

(पुनर्निरूप्य । सर्वातुकम् ।)

व्यक्तिं गताभिरभितो भुवि पांसुलायां
सद्यः पदाङ्कततिभिः कथिताध्वनोऽयम् ।
पश्चादुपेत्य नयने किल राधिकायाः
कम्प्रेण पाणियुगलेन हरिर्दधार ॥ ३७ ॥

ललिता—हन्त हन्त, एसा पुलइदङ्गी वामा लीलाकमलेण [illegible] कमलिक्खणम् (ग)

---

(क) सखि, दक्षिणेन पुंनागषण्डं पश्य पुण्ड्रकमण्डप एनम् ।

(ख) न वृत्तमिदानीमपि द्वयोरन्योन्यदर्शनम् । केवलं रङ्गिणीं प्रेक्ष्य लवङ्गकुञ्जं प्रविशति कृष्णः ।

(ग) हन्त हन्त, एषा पुलकिताङ्गी वामा लीलाकमलेन ताडयति कमलेक्षणम् ।

वृन्दा—पश्य पश्य ।

भ्रूभेदः स्मितसंवृतो नहि नहीत्युक्तिर्मदेनाकुला
विश्रान्तोद्धति पाणिरोधरचनं शुष्कं तथा क्रन्दनम् ।
सृष्टो यः सखि राधया मुहुरयं संगोपनोपक्रमो
भावस्तेन हृदि स्थितो मुरभिदि व्यक्तः समन्तादभूत् ॥ ३८ ॥

ललिता—(संस्कृतेन ।)

प्रातिकूल्यमिव यद्विवृण्वती राधिका रदनखार्पणोद्धुरा ।
केलिकर्मणि गता प्रगल्भतां तेन तुष्टिमतुलां हरिर्ययौ ॥ ३९ ॥

वृन्दा—(विहस्य ।)

नैरञ्जन्यमुपेयतुः परिगलन्मोदाश्रुणी लोचने
स्वेदोद्भूतविलेपनं किल कुचद्वन्द्वं जहौ रागिताम् ।
योगौत्सुक्यमगादुरः स्फुरदिति प्रेक्ष्योदयं सङ्गिनां
राधे नीविरियं तव श्लथगुणा शङ्के मुमुक्षां दधे ॥ ४० ॥

ललिता—कधं एदं विअड्ढमिहुणं माहवीकुडङ्गन्तरिदं संवुत्तम् । (क)

वृन्दा—

राधामाधवयोर्मध्यां केलिमाध्वीकमाधुरीम् ।
धयंस्त्वयनभृङ्गेन कस्तृप्तिमधिगच्छति ॥ ४१ ॥

(क) कथमिदं विदग्धमिथुनं माधवीकुञ्जान्तरितं संवृत्तम् ।

तासौ वामा श्रीराधा ॥ भ्रूभेद इति । संगोपनस्योपक्रमो यः सृष्टस्तेनैव प्रत्युत भावोऽव्यक्तोऽभूत् । भ्रूभेदः भ्रुवोर्वक्रिमा असंमतिव्यञ्जकः । कीदृशः । स्मितसंवृतः स्मितमेव तत्र परमसंमतिव्यञ्जकम् । नहि नहीत्युक्तिर्निषेधकरणम् । मदेनाकुलेति तत्र सात्त्विकविकारः स्वरभेद एव परमविधिव्यञ्जकः । पाणिरोधरचनमनभीष्टमेतदिति व्यञ्जकम् । कीदृशम् । विश्रान्तोद्धति विश्रान्ता उद्धतिरौद्धत्यं यत्र । तत्करस्पर्शेन जातस्तम्भयोर्हस्तयोरौद्धत्ये शक्त्यभावात् । सैवौद्धत्यविश्रान्तिरेव परमाभीष्टव्यञ्जिका । क्रन्दनं दुःखव्यञ्जकं शुष्कत्वमेव दुःखाभावव्यञ्जकमिति ॥ नैरञ्जन्यमिति । नैरञ्जन्यं प्रसन्नत्वं कज्जलरागशून्यत्वं च लोचने परिगलन्मोदाश्रुणी सती नैरञ्जन्यमुपेयतुरित्यन्वयः । एवं सर्वत्र । रागिता विषयाभिरुचि कुङ्कुमादिरागं च । योगे पक्षे संगमे औत्सुक्यम् । मुमुक्षा पक्षे ग्रन्थिच्युतीच्छान् । राधेति । नेत्र्यौ कामदोषराहित्येन प्रेमैव गोपरामाणां काम इत्यागम-

ललिता—सहि, दक्खिणेण पुंणाअसण्डं पेक्ख पुण्डअमण्डवे णम् । (क)

वृन्दा—(विलोक्य । सहर्षम् ।)

चक्रं वशीकृतवतः किल नैचिकीनां
वंशीनिनादमधुना मधुसूदनस्य ।
आभीरशेखरगतिं प्रतिपादयन्ती
शोभा बभूव परमा परमस्य यष्टिः ॥ ३५ ॥

ललिता—ण वुत्तं दाणिं पि दोण्णं अण्णोण्णदंसणम् । केअलं रङ्गिणिअं पेक्खिअ लवङ्गकुडङ्गं पविसदि कण्हो । (ख)

वृन्दा—पश्य पश्य ।

विस्मरान्परितो हरिमूर्तितः परिमलानुपलभ्य कलावती ।
इयमितः सखि पुण्ड्रकमण्डपे सितमुखी तनुवल्लिमपावृणोत् ॥ ३६ ॥

(पुनर्निरूप्य । सकौतुकम् ।)

व्यक्तिं गताभिरभितो भुवि पांसुलायां
सद्यः पदाङ्कततिभिः कथिताध्वनोऽयम् ।
पश्चादुपेत्य नयने किल राधिकायाः
कम्प्रेण पाणियुगलेन हरिर्दधार ॥ ३७ ॥

ललिता—हन्त हन्त, एसा पुलइदङ्गी राहा लीलाकमलेण ताडेदि कमलिक्खणम् (ग)

---

(क) सखि, दक्षिणेन पुंनागषण्डं पश्य पुण्ड्रकमण्डप एनम् ।

(ख) न वृत्तमिदानीमपि द्वयोरन्योन्यदर्शनम् । केवलं रङ्गिणीं प्रेक्ष्य लवङ्गकुञ्जं प्रविशति कृष्णः ।

(ग) हन्त हन्त, एषा पुलकिताङ्गी राधा लीलाकमलेन ताडयति कमलेक्षणम् ।

---

[illegible]

वृन्दा—पश्य पश्य ।

भ्रूभेदः स्मितसंवृतो नहि नहीत्युक्तिर्मदेनाकुला
विश्रान्तोद्धति पाणिरोधरचनं शुष्कं तथा क्रन्दनम् ।
सृष्टो यः सखि राधया मुहुरयं संगोपनोपक्रमो
भावस्तेन हृदि स्थितो मुरभिदि व्यक्तः समन्तादभूत् ॥ ३८ ॥

ललिता—(संस्कृतेन ।)

प्रातिकूल्यमिव यद्विवृण्वती राधिका रदनखार्पणोद्धुरा ।
केलिकर्मणि गता प्रगल्भतां तेन तुष्टिमतुलां हरिर्ययौ ॥ ३९ ॥

वृन्दा—(विहस्य ।)

नैरञ्जन्यमुपेयतुः परिगलन्मोदाश्रुणी लोचने
स्वेदोद्भूतविलेपनं किल कुचद्वन्द्वं जहौ रागिताम् ।
योगौत्सुक्यमगादुरः स्फुरदिति प्रेक्ष्योदयं सङ्गिनां
राधे नीविरियं तव श्लथगुणा शङ्के मुमुक्षां दधे ॥ ४० ॥

ललिता—कधं एदं विअड्ढमिहुणं माहवीकुडङ्गन्तरिदं संवुत्तम् । (क)

वृन्दा—

राधामाधवयोर्मध्यां केलिमाध्वीकमाधुरीम् ।
धयन्नयनभृङ्गेन कस्तृप्तिमधिगच्छति ॥ ४१ ॥

---

(क) कथमिदं विदग्धमिथुनं माधवीकुञ्जान्तरितं संवृत्तम् ।

---

ताश्री वामा धीराधा ॥ भ्रूभेद इति । संगोपनस्योपक्रमो य सृष्टस्तेनैव प्रयुत भावोऽव्यक्तोऽभूत् । भ्रूभेदः भ्रुवोर्वक्रिमा असमतिव्यञ्जक । कीदृशः । स्मितसंवृतः स्मितमेव तत्र परमर्षमतिव्यञ्जकम् । नहि नहीत्युक्तिर्निषेधकरणम् । मदेनाकुलेति तत्र सात्त्विकविकारः स्वरभेद एव परमविधिव्यञ्जक । पाणिरोधरचनमनभीष्टमेतदिति व्यञ्जकम् । कीदृशम् । विश्रान्तोद्धति विश्रान्ता उद्धतिरौद्धत्यं यत्र । तत्करस्पर्शेन जातस्तम्भयोर्हस्तयोरौद्धत्ये शक्त्यभावात् । तेनौद्धत्यविश्रान्तिरेव परमाभीष्टव्यञ्जिका । क्रन्दनं तु तथाञ्जकं शुष्कत्वमेव तु मानाभावव्यञ्जकमिति ॥ नैरञ्जन्यमिति । नैरञ्जन्यं अञ्जनं कज्जलरागशून्यत्वं च लोचने परिगलन्मोदाश्रुणी सती नैरञ्जन्यमुपेयतुरित्यन्वयः । एवं सर्वत्र । रागितां सिन्दूरादिकुङ्कुमादिरागं च । योगे पक्षे संगमे औत्सुक्यम् । मुमुक्षां पक्षे ग्रन्थिच्युतीच्छाम् । राधेति । मध्यां कामदोषराहित्येन 'प्रेमैव गोपरामाणां काम इत्यगम-

ललिता—हला, एदे गलन्तमरन्दंपि महविपुप्फसंदोहं मुञ्चिअ कीस भिङ्गा पुव्वाहिमुहं धाअन्ति । (क)

वृन्दा—सखि, विमुच्य माधवीमण्डपं नागरमण्डलोत्तंसौ प्रस्थितौ । तयोरामोदमनुसर्पन्तः षट्पदा धावन्ति । तदेहि । लतामन्दिरालोकनेन नन्दयावश्चक्षुषी । (इति परिक्रम्य ।) ललिते, पश्य पश्य ।

मनोहारी हारस्खलितमणिभिस्तारतरलैः
परिम्लायन्माल्यो मिलितपुरटालंकृतिकणः ।
अयं कुञ्जस्तल्पीकृतकुसुमपुञ्जमणयवा-
न्समन्तादुत्तुङ्गं पिशुनयति रङ्गं मुरभिदः ॥ ४२ ॥

ललिता—(निपुणं निरूप्य । संस्कृतेन ।)

कृष्णाङ्गसंगममिलद्घुसृणाङ्गरागा
राधापदस्खलदलक्तकरक्तपार्श्वा ।
सिन्दूरबिन्दुचितघर्मजलोक्षितेयं
दृना धिनोति नयने मम पुष्पशय्या ॥ ४३ ॥

वृन्दा—(सविस्मयम् ।)

चिक्रीड या रजसि रञ्जितसूत्रबद्ध-
गोकर्णमात्रचिकुरा नवविद्धकर्णा ।
सेयं कुतः प्रवरविभ्रमकौशलानि
राधाध्यगीष्ट बत वैरजितं जिगाय ॥ ४४ ॥

---

(क) सखि, एते गलन्तमरन्दमपि माधवीपुष्पसंदोहं मुक्त्वा कस्माद्भ्रमाः पूर्वाभिमुखं धावन्ति ।

---

स्वपाम्' इत्युक्तरीत्या परमरविश्राम् । पयश्चाप्यादधन् ॥ मनोहारीति । हाराः स्खलिता ये मणयस्तैर्मनोहारी । ताराः मुक्ता एव तरलहारमध्यगो येषु ते । पिशुनयति सूचयति ॥ कृष्णाङ्गेति । घुसृणं कुङ्कुमम् ॥ चिक्रीडेति । या रजसि चिक्रीड क्रीडितवती । रञ्जितेन सूत्रेण बद्धा गोकर्णमात्रा गोकर्णपरिमिताश्चिकुरा यस्याः । अङ्गुष्ठानामिकाविस्तारेण गोकर्णो भवति । तथा शुभमतेन—'प्रदेशतालगोकर्णास्तर्जन्यादिमुखे तते' इति । नवविद्धौ कर्णौ यस्याः । पुनीठ्यमपि कस्माद्धेतोः प्रकारान्तरं प्राप्तवती ।

**ललिता**—(पूर्ववत प्रेक्ष्य ।) वुन्दे, पेक्ख णादिदूरे सराहो माहवो। (क)

**वृन्दा**—शृणुत किमाह ।

(नेपथ्ये ।)

**राधा**—(संस्कृतेन ।)

कुरु कुवलय कर्णोत्सङ्गे लवङ्गमभङ्गुर
विकिर चिकुरस्यान्तर्मल्लीस्रज क्षिप वक्षसि ।
अनघ जघने कादम्बीं मे प्रलम्बय मेखला
कलयतु न मामालीवृन्दं हरे निरलङ्कृतिम् ॥ ४५ ॥

**वृन्दा**—(स्मित कृत्वा ।)

वहन्ती मञ्जिष्ठारुणिततनुसूत्रोज्ज्वलरुची-
न्नखाङ्कान्खेलोर्मिस्खलितशिखिपक्षावलिरियम् ।
स्फुरन्मुक्तातुल्यैरलघुघनघर्माम्बुभिरल
समृद्धा मे मेधा मधुमथनमूर्तिर्मदयति ॥ ४६ ॥

(तत प्रविशति कृष्ण, प्रसाधिताङ्गी राधा च ।)

**कृष्णः**—

नीत ते पुनरुक्तता भ्रमरकै कस्तूरिकापत्रक
नेत्राभ्या विफलीकृत कुवलयद्वन्द्व च कर्णार्पितम् ।
हारश्च स्मितकान्तिभङ्गिभिरल पिष्टानुपेषीकृत
किं राधे तव मण्डनेन नितरामङ्गैरसि द्योतिता ॥ ४७ ॥

**उभे**—(उपसृत्य ।) सुन्दर, इद परममञ्जुल वासन्तीकुसुममण्डनम् ।

**कृष्णः**—(स्तबकद्वन्द्वमादाय । सहर्षम् ।)

ध्येयेन मुक्तवृन्दस्य काम्यमाना मुहुर्मया ।
युक्ता स्वमतिमुक्ताना श्रेण्या सुश्रोणि सेवितुम् ॥ ४८ ॥

(इति राधामवतसयति ।)

---

(क) वृन्दे, पश्य नातिदूर सगधो माधव ।

---

मन विस्मये । इदानीमव मा्न्वा आसीत्, इदानीमेव प्रवरतम्ब्भूदिति भाव ॥ कुर्विति । कादम्बीं कदम्बपुष्परचिताम् ॥ वहन्तीति । मञ्जिष्ठयारुणितसूक्ष्मसूत्रस्य रुग्(म)सूक्ष्मोऽप्युज्ज्वला रुचि कान्तिर्येषा तान् नखाङ्कान् ॥ नीतमिति । भ्रमरकैरलकलम्बिताङ्कै । ते ललाटे भ्रमरका ' इत्यमर ॥ ध्येयेनेति ।

१ 'पुरत ' इति मूलपुस्तकपाठ

(नेपथ्ये ।)

अनुपरमति यामे काममह्नस्तृतीये
जलदसमयलक्ष्मीयौवनोज्जृम्भणेऽद्य ।
नवयवसकदम्बैस्तर्पितानां कदम्बः
कलयति सुरभीणां गोकुलायाभिमुख्यम् ॥ ४९ ॥

**ललिता**—राहे, अणुजाणेहि । रत्तिमण्डनत्थं दुलहं वसन्तकुसुमं गेहिस्सम् । (क) (इति निष्क्रान्ता ।)

**कृष्णः**—(स्मित्वा । जनान्तिकम् ।) वृन्दे, किंचिद्विनोदं विधातुकामोऽस्मि । तदत्र प्रियायाः प्रत्यायितेयं पुरो द्रुमाधिरूढा कक्खटी त्वया मत्पक्षग्राहिणी क्रियताम् ।

**वृन्दा**—भवतु । यतिष्ये ।

**कृष्णः**—(राधामवेक्ष्य ।) प्रिये चन्द्रा—(इत्यर्धोक्ते कृत्रिमसंभ्रमं नाटयति ।)

**राधिका**—(सखेदम् ।) हद्धी हद्धी । कधं एव्वं सुणन्तं वि ण मे फुडिदं कण्णजुअलम् । (ख)

**वृन्दा**—(स्वगतम् ।) पिच्छिकाभ्रमणेन कक्खटिकामुन्मोच्य हरेरभीष्टं व्याहारयिष्ये । (इत्यलक्षितं तथा कृत्वा प्रकाशम् ।) सखि, रङ्गे मा भज वैमुख्यम् ।

**कृष्णः**—प्रिये चन्द्रानने, किमित्यकाण्डे विमनस्कासि ।

---

(क) राधे, अनुज्ञापय रात्रिमण्डनार्थं दुर्लभं वसन्तकुसुमं गृहीष्यामि ।
(ख) हा धिक् हा धिक् । कथमेवं शृण्वदपि न मे स्फुटितं कर्णयुगलम् ।

---

अतिमुक्तानामतिशयमुक्तानां माधवीपुष्पाणां च । 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता' इत्यमरः ॥ **अनुपरमतीति** । अथ सुरभीणां कदम्बः समूहः अह्नस्तृतीये यामे प्रहरे अनुपरमत्यसमाप्ते सति गोकुलाय गोकुलं प्रवेष्टुमाभिमुख्यं कलयति करोतीत्यन्वयः । अथ किंभूते । जलदसमयलक्ष्म्या वर्षाकालशोभाया यौवनस्य विस्तारस्योज्जृम्भनं(ण) प्रकाशो यत्र तथाभूते ॥ **वृन्दे इति** । प्रत्यायिता प्रतीतकारिणी । मत्पक्षग्राहिणी मत्कार्यसहाया ॥ **प्रिये इति** । कृत्रिमसंभ्रमेण हे प्रिये चन्द्रावलि इति गोत्रस्खलनं ज्ञापयति ॥ **सखीति** । रङ्गे सुरतसमये ॥ **परिसंदेह**

(नेपथ्ये ।)

सामिणि, इमिणा तुज्झ मुद्धत्तणेण ललिदा ण जीविस्सदि । (क)

राधिका—(ऊर्ध्वमालोक्य । स्वगतम् ।) णीसंदेहम्हि किदा कक्खडिआए । (प्रकाशम् ।) पअण्डं क्खु कुलिसविप्फूज्जिदं कधं डिण्डिमाडम्बरेण संवरणिज्जं होदु । (ख) (इति पराङ्मुखी भवति ।)

कृष्णः—(अपवार्य ।)

समरोद्धुरकामकार्मुकश्रीविजयिभ्रूयुगमाकुलाक्षिपद्माम् ।
विधुरीकृतमप्यतिक्रुधाग्रे मम राधावदनं मनो धिनोति ॥ ५० ॥

(इति राधापटाञ्चलमुच्चाल्य ।) सुन्दरि, मधुरेण समाप्यतां मधुविहारकौतुकम् ।

(पुनर्नेपथ्ये ।)

हद्धी हद्धी । भो पउमासिक्खे दुट्ठसारसि, तुमं पि कडक्खसि । ता कीस पराणं धारेमि । (ग)

राधिका—(निशम्य सरोषमपसर्पन्ती ।) वुन्दे, परं केत्तिअं विडम्बिदम्हि । ता झत्ति वारेहि णं कवडपरिपाडीणाटअसुत्तधारं भुअणमाराररम्भिमुरलीसिक्खाणीसङ्कं करालिआणत्तिणीकीलाकुरङ्गम् । (घ)

कृष्णः—(सानन्दस्मितम् ।) सखि वृन्दे, प्रसादय राधाम् ।

---

(क) स्वामिनि, अनेन तव मुग्धत्वेन ललिता न जीविष्यति ।

(ख) निःसंदेहास्मि कृता कक्खटिकया । प्रचण्डं खलु कुलिशविस्फूर्जितं कथं डिण्डिमाडम्बरेण संवरणीयं भवतु ।

(ग) हा धिक् हा धिक् । भो पद्माशिष्ये दुष्टसारसि, त्वमपि मां कटाक्षयसि । तत्कस्मात्प्राणं धारयामि ।

(घ) वृन्दे, परं कियद्विडम्बितास्मि । तज्झटिति वारयैनं कपटपरिपाटीनाटकसूत्रधारं भुवनमाराररम्भिमुरलीशिक्षानिःशङ्कं करालिकानप्त्रीक्रीडाकुरङ्गम् ।

---

इति । प्रचण्डं खलु कुलिशविस्फूर्जितं 'चन्द्रा–' इत्यर्धसंबोधनध्वनिः । डिण्डिमाडम्बरेण चन्द्रानने इति परिपूर्णसंबोधनध्वनिना । संवरणीयं संगोपनीयम् ॥ समरेति । कीदृशं राधावदनम् । समरोद्धुरस्य युद्धप्रचण्डस्य कामस्य कार्मुकश्रियो धनुःशोभाया अपि विजयिनी भ्रूयुगलं यत्र ॥ भो पद्माशिष्ये इत्यादि कक्खटिकावचनेन चन्द्रावलीपरिवाराणां निर्भर्त्सनं ज्ञापयति ॥ वृन्दे इति । भुवनानां माराररम्भिणी कन्दर्पारम्भकारिणी या

